

# ॥ द्वैतसिद्धान्तसारः ॥

# DWAITHASIDDHANTHASARA

By

Vidyavachaspathy

**S. R. RAGHUTHAMACHARYA**

Asthana Vidwan

Sri Sri Vyasaraya Math & T. T. D. Vidwan

Published by :

**SRI RANGANATHACHARYA**

SARVADHIKARI

SRI VYASARAYA MATH

SOSALAI, MYSORE DT.

1983



# ॥ द्वैतसिद्धान्तसारः ॥

# DWAITHASIDDHANTHASARA

*By*


Vidyavachaspathy

**S. R. RAGHUTHAMACHARYA**

Asthana Vidwan

Sri Sri Vyasaraya Math & T. T. D. Vidwan



Published by :

**SRI RANGANATHACHARYA**

SARVADHIKARI

SRI VYASARAYA MATH

SOSALAI, MYSORE DT.

1983

## विषयानुक्रमणिका

श्री लक्ष्मीहयग्रीवाय नमः

अद्भुतं मूलगोपालं रुक्मणीसहितं वरम् ।
ब्रह्मादिपूजितं वन्दे वेणुनादविशारदम् ॥

चन्द्रिकाचार्य संसक्त मानसं यति पुङ्गवम् ।
विद्यापयोनिधिंवन्दे वेदवेदान्तपारगम् ॥

गोपालकृष्णपूजायां तत्परो यति पुङ्गवः ।
विद्यापयोनिर्धिलोके जीवेत्तु शरदःशतम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्याणां पदवाक्यप्रमाणपारावार परीणानां सर्वतन्त्रस्वतन्त्र श्रीमद्वैष्णव सिद्धान्त प्रतिष्ठापनाचार्याणां, श्रीसर्वज्ञाचार्यकरार्चित श्रीमूलगोपालकृष्ण पट्टाभिराम वेदव्यास दिव्यश्रीपादपद्माराधकानां श्रीव्यासराजगुरुसार्वभौमानां कर्णाटक विद्यासिंहासनाधीश्वराणां श्रीमद्विद्यावारिधितीर्थ श्रीपादकरकमल संजातानां श्रीमद्विद्याप्रसन्नतीर्थकरकमल संजातानां श्रीमद्विद्यापयोनिधितीर्थ-श्रीपादानां अंघ्रिपद्मद्वयी सन्निकर्षे समर्पितः

# ॥ द्वैतसिद्धान्तसारः ॥

[ विद्यावाचस्पति सा. रा. रघूत्तमाचार्यः ]

**मङ्गलाचरणम्—**

आचार्यः पवनोऽस्माकमाचार्याणी च भारती ।
देवो नारायणः श्रीशः देवी मङ्गलदेवता ॥

श्रीमध्वः कल्पवृक्षश्च जयाचार्यस्तु धेनवः ।
चिन्तामणिस्तु व्यासार्यः मुनित्रयमुदाहृदम् ॥

अभ्रमं भङ्गरहितं अजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥
क्वानन्दतीर्थयोगीन्द्रवाचः देवैः सुदुर्विदा ।
क्वाहं मन्दमति क्वेदं मध्वानुग्रहसाधनम् ॥

**सिद्धान्तेतिहासः**—

इह खलु विविधसांसारिकदुःखमग्नानां निःश्रेयसाय समया अनादिकालतो वृत्ताः प्रवाहतः ।

बौद्धजैनागमौ पूर्वपक्षौ सर्वागमस्य हि ।
ततः परस्ताज्जातेषु मतेषु च यथाक्रमम् ॥
पूर्वं पूर्वः पूर्वःपक्षः यावन्मध्वमतोदयः ।
अन्ते सिद्धिस्तु सिद्धान्तः मध्वस्यागम एव हि ॥
अस्मादुत्तरपक्षोऽन्यो यस्मान्नाद्यापि दृश्यते ॥

[युक्तिमल्लिका]

इति वचनात् सर्वसमयेभ्यः परतः सिद्धस्य मध्वसिद्धान्तस्य सिद्धान्तेत्यन्वर्थकं नाम । तस्य द्वैतसिद्धान्तः, तत्ववादः इति च नामान्तरे । द्वयोः (जीवेश्वरयोः) भावः द्विता । सैव द्वैतं इति जीवेश्वरभेद प्रधानत्वात् द्वैतसिद्धान्त इति । मायावादशून्यवाद प्रतिबन्धितया तत्त्ववाद इति च । श्रीमन्मध्वाचार्यैः पुनरुदाहृतत्वात् मध्वसिद्धान्त इति प्रसिद्धः । न तु तैर्नूत्नतया स्थापितः । यतोऽयं हंसनामक परमात्मनः सिद्धान्तः । 'हरिःपरतर' इति च यो मध्वसिद्धान्तप्रमेयः स एव–.

'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' (गीता. ७. ७) इति वक्तुः श्रीकृष्णस्याभिमतः । यः पुन 'सत्यं जगत्' इति सोऽपि, 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' (गीता. १६-८) इति वक्तुः श्रीकृष्णस्याभिमतः । जगतः असत्यत्वादि निन्दाकर्तुः श्रीकृष्णस्याभिमतः । भगवद्गीतामूपनिषत्सु एव मुक्तः मध्वसिद्धान्तः न केवलं भगवतः, किन्तु सर्वोपनिषदामपि सिद्धान्तः ।

यो ब्रह्माणं विदधातिपूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इति मध्वसिद्धान्ताख्य धर्म एव ब्रह्मणे भगवतोपदिष्टः । ब्रह्म द्वारा सनकादयः दुर्वासाः ज्ञाननिधिः गरुडवाहनः कैवल्यतीर्थः ज्ञानेशतीर्थः परतीर्थः सत्यप्रतिज्ञतीर्थः प्राज्ञतीर्थः अच्युतप्रेक्षः इत्यादि शिष्यप्रशिष्यपरंपरया देवर्षिपितृ[1]प नरेषुविस्तृतः अनुष्ठितश्च । एवमनादेरपि अस्य सिद्धान्तस्य कालतः शापतश्च ग्लानिः भवत्येव । यदा यदा हि ग्लानिर्भवति तदा तदा भगवान् गीतोक्तस्ववचनानुसारेण भुव्यवतीर्य स्वयं वा संस्थापयति । अन्यद्वारा वा ॥

वैवस्वतमन्वन्तरेऽस्मिन् महायुगेषु अष्टाविंशे कृतयुगे नारायणोपदिष्टं सम्यग्ज्ञानं सर्वेषु सत्सु संशयाद्यनास्कन्दितमेवास्थितम् । कालबलेनत्रेतायां, सत्सु केषाञ्चित् 'हरिः परतरो वा हरः परतरो वा', 'सगुणो वा निर्गुणो वा' इत्यादि

---

1. पान्तीति पाः चक्रवर्तिनः । क्षीति क्षयार्थस्य क्षेः रूपम् । मनुष्योत्तमवाचकम् । तेषामितरापेक्षया अल्पायुष्ट्वात् ।

संशयविषयतां, अन्येषु तु 'हरः एव परतरः' 'हरिः निर्गुण एव' इत्यादि मिथ्याज्ञानविषयताञ्च प्राप्य किञ्चिदन्यथाजातम् । द्वापरे, द्वौज्ञानपादौ परौ अवशिष्टौ यस्मिन्निति ज्ञानपादद्वययुते युगे, कालतः, भागद्वयस्यान्यथात्वस्य युक्तत्वेपि गौतमशापाख्य विशेषकारणेनाखिलज्ञास्यान्यथात्वं जातम् । (महाभारत-तात्पर्यनिर्णये १०-३६) । कलिरप्येतस्मिन्नन्तरे ब्रह्मवरात् । [1]परशुक्लत्रयं विना, सर्वेष्वन्येषु प्रविश्य चित्तं भ्रमयित्वा कदागमान् कारयित्वा सर्वानपि शास्त्रसंघान् उत्सादितवान् ।

एवं नष्टधर्मज्ञानलोककृपालुभिः ब्रह्मरुद्रेन्द्रादिभिः अर्थितः भगवान् नारायणः व्यासत्वेनावतीर्य अपपाठादिना तिरोहितान् वेदान् चतुर्धाविभज्याध्यापनेनाभिव्यज्य तदर्थनिर्णयाय ब्रह्म-सूत्राणि कृत्वा ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु सम्यग्ज्ञानं स्थापितवान् ॥

तच्चोक्तं स्कान्दे (ब्रह्मसूत्रभाष्यम् १-१-१)

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगेस्थितम् ।
किञ्चित्तदन्यथाजातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेश्शापात् ज्ञानेत्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवाः ब्रह्मरुद्रपुरस्सराः ॥
शरण्यं शरणं जग्मुर्नारायण मनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥

---

1. परे परमात्मनि । शुक्लाः, शुद्धाः, लक्ष्मीः, ब्रह्मवायू, सरस्वतीभारत्यौ इति त्रयम् ।

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहारः हरिः स्वयम् ॥
चतुर्धाव्यभजत्तांश्च....पुनस्तस्यार्थवित्तये ।
चकारब्रह्मसूत्राणि .................. ॥
एवं विधानि सूत्राणि कृत्वा व्यासो
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ॥
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ॥ इत्यादि ॥

कलावस्मिन् युगे कालबलेन बहुभिर्वादिभिः स्वस्वमता-नुसारेण प्रणीतेभ्यः ब्रह्मसूत्रोपनिषद्भाष्येभ्यश्च, विज्ञावभानुमति लीने सति, वेदान्तमार्गपरिमार्गणदीनदूनेषु सत्सु च, खिन्नहृद देवाश्चतुर्मुखमुखाः मुकुन्दं शरणं प्रजग्मुः,

युगत्रयावतारत्वात् त्रियुगे विष्णुच्यते ।
ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलम् ॥

इति भगवान् स्वयं अनुद्बुभूषुः, ब्रह्माणमपि अनादिदिक्षुः, सर्वज्ञं अन्यं कार्यवीर्यं देवञ्चानवेक्ष्य—'नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि, इति तैत्तिरीये प्रत्यक्षब्रह्मेति बिरुदांकित बलित्था तद्वपुषे धायिदर्शतं--इत्यादि वेदभागेषु अवतारत्रयोपेत त्वेन (हनुमद्भीममध्वाः) प्रतिपाद्यमानम्—

अश्वमेधक्रतुः श्रेष्ठः ज्योतिः श्रेष्ठः दिवाकरः ।
ब्राह्मणो द्विपदां श्रेष्ठ देवेष्वपि मारुतः ॥

इत्यादि भारतवाक्यैः इतरं देवेषु सर्वोत्तमम्,

तस्मादायु:[1] ज्ञान वाची व शब्दो बलवाचकः । इति ज्ञानबलपरिपूर्णत्वेन वायुशब्दवाच्यं, मुख्यप्रमाणं स्वमत जीर्णोद्धाराय भुव्यवतर्नुं आदिदेश । तं आदेशमौलिमणिं मूर्ध्ना धृत्वा मरुत् उडुपीति प्रसिद्धरजतपीठपुरस्य समीपस्थ[2]पाजकक्षेत्रवास्तव्ययोः [3]मध्यगेहभट्टवेदवतीति सुगृहीतनामधेययोः दम्पत्योः [4]चतुर्थपुत्रत्वेन (१२६८ A.D.) अवततार । श्रीमध्वचरितामृतसङ्ग्रहः–

जनकः जातस्य तस्य परमसुन्दरनन्दनस्य वासुदेवेति नाम चकार । यदन्यन्तमन्त्र[5]र्थमभूत् । शुक्लपक्षचन्द्रमाइव वर्धमानस्सः पुत्रः धैर्यसाहसाद्युपबृंहितानि हृदयस्पर्शीनि बालक्रीडितानि कुर्वन् उचिते वयसि पित्रोपनीतः गुरुमुपसद्याध्ययनादिकं कृत्वा गुरुदक्षिणां वितीर्य तदनुज्ञामादत्त । स्वावतारकार्यार्थं पारिव्राज्यसाम्राज्यनिबद्धनिश्चयः गुरुमन्विष्य पूर्वोक्ताच्युतप्रेक्षं प्राप्य तस्माद्वराश्रमं प्राप्य पूर्णबोधेति नामाङ्कितः बभूव । इदमपिनाम दशप्रमतिं जनयन्त योषणः"--इति वेदवाक्येन—

---

1. अयपयगतौ । गत्यर्थानां ज्ञानार्थकत्वम् ।
2. म. वि. २-११ पातीतिपः । न जायते इत्यजः । पश्चासावजश्च पाजः । परशुरामः । तस्मात्-कं-तीर्थंजातं यस्मिन् ॥
3. मध्यगेहभट्टस्य नारायणभट्ट इति नाम । श्री मध्वो विजयश्च मध्वविजयो नारायणप्रोद्भवः इति पद्येन ज्ञायते ॥
4. म. वि. २-३५ कन्या तृतीया । म. वि. ४-२२ पुत्रद्वयम् ।
5. वार्थं त्वा गति गन्धनयोः । गत्यर्थानां ज्ञानार्थकत्वम् । ज्ञानार्थमवतीर्णः । अधुवेयः-मुख्यप्रमाणः इति मध्यमपदलोपीसमासः ॥

दशेति पूर्णमुद्दिष्टं मत्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः इति ।

स्मृत्या चोदाहृतम् अनुरूपमेवासीत् । अथ जैनान् बहुतर्ककर्कशान् पण्डितान् स पत्रलम्बनं जिगाय । गुरुरच्युतप्रेक्षः स्वशिष्यस्यासाधारणीं प्रतिभामुद्वीक्ष्य वेदान्तविद्यासाम्राज्यपालनेऽयमतीव निपुण इति तं यौवराज्येऽभिषिच्य तस्यानन्दतीर्थेति नामदत्तवान् । आनन्दप्रदं तीर्थं शास्त्रं यस्मादिति तन्नाम-- 'मध्व उत्स' इति वेदवाक्यबोधितमध्वशब्दार्थसमानार्थमभूत् ॥

मध्वित्यानन्द उद्दिष्टः वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनुः ॥ इति ।

गुरुणासह विजययात्रायै प्रस्थितः दाक्षिणात्य पण्डितान् विविधसभारङ्गेषु विश्वान् विजित्य, अनन्तसत्पुरं रामेश्वरं, श्रीरङ्गं केरलमण्डलं इत्यादि क्षेत्रेषु सुन्दरेषु सुरमन्दिरवृन्देषु इन्दिरारमणवन्दनकृत्यं कुर्वन् क्रमादुदीचीमाशां प्रययौ । तत्र तत्र साङ्गवेदचतुरान् तर्कतन्त्रकुशलान् पराभूय गुरौ राज्ञां स्वीकृत्य श्री वेदव्यासदिदृक्षया बदरिकाश्रमं जिगमिषुः 'रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्' इति न्यायेन ।

राम कृष्णादिरूपेषु बलकार्यो जनार्दनः ।
दत्तव्यासादिरूपेषु ज्ञानकार्यः तथा प्रभुः ।

इति ज्ञानप्रदर्शनाय कृतावताराय व्यासाय ज्ञानकार्यं गीताभाष्यं उपायनमपर्ययन् बदरीस्थाची सन्निषण्णवपुषः परमस्य पुरतः

तत्पपाठ। आद्यपद्ये 'शक्तितः वाच्मी'ति स्थाने 'लेशतः वच्मि' इति पदं योजयेति भगवता आज्ञप्तः तथा कृत्वा स्वाश्रमोपगगमनाय श्रीव्यासेनाहूतः। अथ हैनवते तटान्तरे स्थितं तदाश्रमं प्राप्य तन्निकटे वेदादीनां परमार्थं विशेषतः श्रुत्वा तेन सहाश्रमान्तरे स्वाचारानुष्ठानमुखेन लोकान् शिक्षयितुं तपश्चरन्तं साक्षान्नारायणं ददर्श, अथ ननाम च।

तेन च 'सूत्रभाष्यं विरचय्य श्रुतिस्मृतीनां श्रीव्याससम्मतं सिद्धान्तं प्रकाशयतत्त्वज्ञानयोग्यान् सौम्यपुरुषान् अनुगृहाणे' त्याज्ञप्तः - 'बालसंघमपि बोधयद्भृशं दुर्निरूपवचनश्च पण्डितैः' इति स्तुतं ब्रह्मसूत्रभाष्यं रचयामास॥ रूप्यपीठपुरं प्रत्यागच्छन् पथि पथि च भाष्योपदेशेन शोभनपट्टादिपण्डितान् स्वशिष्यान् कृत्वोडुपीं प्राप॥

तत्र श्रीमदाचार्यः श्रीकृष्णप्रतिष्ठां कृत्वा तत्पूजनायाष्टौ मठाधिपतीन् न्ययुङ्क्त। पुनरपि बदरीं गत्वा मध्येमार्गं स्वस्य चतुष्षष्टिकलापूर्णत्वं अणिमाद्यष्टैश्वर्यं च प्रकटयन् महाभारततात्पर्यनिर्णये श्रीव्यासेनाज्ञप्तः पादाभ्यां पुनः पुनः पृथिवीं, दर्शयंश्च हरेः पदं, धूतदुःसमयध्वान्तः गां गतः आदित्य इव लोकपूज्यो व्यराजत।

एकदा केरलमहाराजेन जयसिंहेन सत्कृतः सत्सभायां विविधप्रभूणां जनतायाश्च मध्ये भाष्यव्याख्यां कुर्वन् उपन्यासभङ्ग्या साङ्ख्यभास्करवैशेषिकादिमतानि एकैकश अनूद्य तेषामनुपमस्रभाषितत्वं प्रकटयन्—

श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतो
भेदो जीवगणाः हरेरनुचराः नीचोच्चभावं गताः ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥

इत्यादि प्रमेयजातं सप्रमाणं सयुक्तिकं सुदृढं निपुणतरञ्च प्रत्यपादयत् ।

तदानीमेवोपन्यासं शृण्वन्नासीन. 'त्रिविक्रमार्याः' नामकश्चन सूरिपोताः प्रतिवादिभयङ्कराः पण्डिता रहसि आचार्यशास्त्रं दृष्ट्वा तस्यप्रसन्नतामनुभवन् तत्त्वजिज्ञासया तं प्रणम्य तेन सह पञ्चदशदिनानि वादं कृत्वा निरुत्तरः निश्चोद्यश्चभूत्वा ।

'पदपद्मरजोदास्यं ध्रुवं मे दीयतामिति' (म.वि. १५.७०) मध्वशिष्यो बभूव । तत्प्रार्थनया श्रीमध्वः सिद्धान्तयुक्तीनां सुखबोधाय "अनुव्याख्यानं" नाम पद्यात्मकं ग्रन्थं निर्ममे तस्य व्याख्यानमेव श्रीजयतीर्थ पूज्यचरणैः रचितं श्रीमन्न्यायसुधेति । 'सुधावा पठनीया वसुधावा पालनीया इत्याभाणकविषयतया अद्यापि समुज्जृंभते । श्रीमध्वस्य समग्रानुग्रहं प्राप्ताः बहवः गृहिणः यतयः राजानश्चासन् । अहो आचार्यस्य महिमा । तेष्वन्यतमः श्री त्रिविक्रमाचार्यपुत्रः श्रीनारायण पण्डितः । येनकृतं श्रीमदानन्द तीर्थ मुनिवर्य चरितं श्रीमत्सुमध्वविजयाख्यं महाकाव्यं प्रसिद्धं दिवि भुवि च मान्यं विराजते । यस्मादयं चरितामृत सङ्ग्रहश्चोद्धृतः ॥

श्रीमदाचार्यस्य चरित्राणि न केवलमेतावन्ति, किन्तु असंख्येयानि श्रुतानि स्मृतानि कीर्तितानि चाभीष्टं ददातीति अमराः प्रकीर्तयन्ति ॥

**ग्रन्थरचना**

ग्रन्थान् मध्वश्चकारासौ सप्तत्रिंशदमन्दधीः ॥
भाष्याणां दशकञ्चपञ्चकयुत तिस्रश्च निर्णीतयः
विष्णोः स्तोत्रयुगं दशप्रकरण कल्पद्वयञ्च स्मृतिः ।
श्रीकृष्णामृत तन्त्रसार यमलं न्यायावलीदीपनं
येनाकारिमुदैव मध्व मुनिराट् विद्यां स दद्यान्मम ॥

**भाष्याणि** १५—१-१० दशोपनिषद्भाष्याणि । ११. ब्रह्मसूत्र-भाष्यम् १२, अनुभाष्यम् (अनुव्याख्यानम्) १३, अणुभाष्यम् १४. गीताभाष्यम् १५, श्रीभाष्यम् ॥

**निर्णयाः** ३ १. श्रीमन्महाभारततात्पर्यनिर्णयः २ श्रीभागवततात्पर्यनिर्णयः ३, गीतातात्पर्य निर्णयः ॥

**स्तोत्राणि** २ श्रीनृसिंहनखस्तोत्रं, २ द्वादशस्तोत्रम् ॥

अस्यद्वितीयषट्कं किङ्किणीसंवीतघुटिकाभिः मृदङ्ग-झल्लरीप्रभृतिवाद्यविशेषैः करतालध्वनिभिः वासहविशेषतः गानार्हं विराजते । आचार्यस्य गान्धर्वविद्यायां नैपुण्यञ्च प्रकट-यति ॥

**प्रकरणानि** १०

शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरेस्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥

१. कर्मनिर्णयः २. प्रमाणलक्षणम् ३. कथालक्षणम् ४. उपाधिखण्डनम् ५. मायावादखण्डनम् ६. प्रपञ्चमिथ्यात्वानुमानखण्डनम् ७. तत्त्वसंख्यानम् ८. तत्त्वविवेकः, ९. तत्त्वोद्योतः १०. विष्णुतत्त्वविनिर्णयः अगमुश्चेति भूयसीं प्रसिद्धिं गतोऽयम् ॥

प्रकरणाः २ १. जयन्तीनिर्णयः, २. यतिप्रणवकल्पः ॥

शिष्टाः ५ १. सदाचारस्मृतिः २. श्रीकृष्णामृतमहार्णवः
३. तन्त्रसारसंग्रहः ४. यमकभारतम्
५. न्यायविवरणम् ॥

एकैकोग्रन्थः बहुर्थगर्भितः । भावगम्भीराणि आचार्यरचनानि । न सर्वथा अस्मदादिभिरल्पप्रज्ञैः साकल्येन शक्यनिरूपणाविपूर्णप्रभाषितानि ॥

आनन्दतीर्थ भगवद्वचसो विशिष्ट-
व्याख्यानकर्मणि सुरा अधिकारिणोऽत्र ।
यन्मादृशोऽपि यतते तदतीव हास्यं
किं नाम भक्तिविवशस्य विभूषणं तत् ॥

तथापि तदुक्तप्रमेयजातनवकं उत्तरत्र यथामति विव्रियते ।

एवं समापितावतारकार्यः श्रीमदाचार्यः रजतपीठपुरस्थे अनन्तेश्वरदेवालये विविध विशिष्ट शिष्यमध्ये उपनिषदमैतरेयीं व्याख्यन्नासीत् । तद्द्युसभासु गन्धर्वेषु श्रीमध्वकथां वर्णयत्सु इन्द्रादयो देवाः नम्र- शिरोभिः, बद्धैरञ्जलिभिः, स्मितैर्मुखैः श्रुत्वा तद्विजयमहोत्सवं कुर्वाणाः ऋषिभिः गन्धर्वैः समं गगनं स्थित्वा महताऽऽनन्देन तच्छास्त्रं प्रशंसन्तः "नमः

श्रीमन्मध्व प्रदिश सुदृशं नो जय जय" इति सुरतरुकुसुमवर्षैः अर्चयामासुः । आचार्योऽप्यदृश्यः सन् ॥

नवम्यां प्रातरेवासौ माघे मकरगेरवौ ।
प्रतिपेदे बदरिकां शुक्लपक्षे सतां गतिः ॥ [1318 A.D.]

अद्यापि बदरीशैले बदरीषण्डमण्डिते ।
मध्ये मुनीनामध्यास्ते विद्वान् व्यासस्य सन्निधौ ॥

माध्वं नियोगमनुनिष्ठद्भिः परमहंसपरिव्राजकत्व द्यनेक-बिरुदाङ्कितैः पदवाक्यप्रमाणपारावारपारीणैर्द्वैतमतस्थ ज्यमहासनाधीश्वरैः तच्छिष्यप्रशिष्यैश्चायं सिद्धान्तः पोषितः अद्यापि जेजीयते ॥

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजात् उदितकिसलयः पुष्पितोऽयं जयीन्द्रा
दद्यश्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्तशाखी ॥

श्री मध्वागमसेविनो हि सुजनाः सर्वेऽपि कल्याणिनः
भूयासुः मरुदंश शास्त्ररविरा कल्पान्तमुद्योततताम् ॥

सिद्धान्तसार संग्रहः प्रमेयरत्नानि नव ॥

१ श्रीमन्मध्वमते हरिः परतरः—

सतीष्वन्यासु देवतासु हरेरेव परतरत्वं कथमिति चेत् तत्र बहूनि कारणानि सन्ति । आदौ तावत् अनन्तगुणपरिपूर्णत्वा-द्धरिः परतरः । गुणाश्च आनन्दोरुसंविद्द्युतिबलबहुलौदार्य-

वीर्यादयः । अत्र परिपूर्णशब्दस्यादावपि सम्बन्धः । तथा च परिपूर्णानन्तगुणपरिपूर्णत्वं हरेः स्वरूपमित्यर्थः । ज्ञानानन्दाद्येकैकमप्यनन्तम् ।

गुणाः श्रुताः सुविरुद्धाश्च देवेसन्त्यश्रुता अपि नैवात्रशंका । (२-१-३८ भाष्यम्) अथ कस्मादुच्यते ब्रह्मेति । "बृहन्तो ह्यस्मिन् गुणाः" इत्यादि श्रुतेः ॥ म. वि. ७-४६

न रमापि पदाङ्गुली लसन्नखधूराजदनन्तसद्गुणान् ।
गणयेद्गणयन्त्यनारतं परमान् कोऽस्य परो गुणान् वदेत् ॥

भागवतम् २-७-४१ ब्रह्मोवाच—

नान्तं विदाम्यहं अमीमुनयोऽग्रजास्ते
मायाबलस्य पुरुषस्य कुतोऽपरे ये ।
गायन् गुणान् दशशताननं आदिदेवः
शेषोऽधुनापि समवस्यति नास्य पारम् ॥

भागवतम् ११-४-२

यो वाऽनन्तस्य गुणाननन्ताननुक्रमिष्यन्, स तु बालबुद्धिः ।
रजांसि भूमेः गणयेत्कथंचित् कालेन नैवाखिलशक्तिधाम्नः ॥
इत्यादिना अनन्तगुणाः ।

भागवतम् ६-४-४८ तात्पर्ये च

मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे ।
प्रत्येकशो गुणानां तु निस्सीमत्वमुदीर्यते ॥

(गुणविग्रह इति श्रीधरीय पाठः)

श्रुतेः। स च मोक्षः भगवत्प्रीत्यैकसाध्यः। 'यस्य प्रसादात् परमार्तिरूपात् अस्मात्संसारान्मुच्यते नापरेण' इति श्रुतेः। अतः भगवत्प्रीत्युत्पादनद्वारा मोक्षं साधयता वेदेन, यद्बोधेन जीवेषु भगवत्प्रीतिर्भवति, तदेव जीवान् प्रति बोधनीयम्। तथा च दूषणज्ञानस्य प्रीतिसाधनत्वाभावात् कथं परमेश्वरदूषणे तात्पर्यं स्यात्? न हि लोके स्वदोषज्ञातरि प्रीतिर्दृष्टा इति॥

सौपर्णश्रुत्यर्थः— वेदे श्रुताः गुणाः अणुत्वमहत्वादयः सुविरुद्धाश्च। लोकदृष्ट्या अतिविरुद्धाः अन्यत्र सहादृष्टाः अपि, देवे हरौ सन्त्येव। न तु विरुद्धतया तेषां मिथ्यात्वं कल्प्यम्। एवं हरावश्रुताः वेदानुक्ताश्च यथा चिन्त्याः रमाब्रह्मादिभिः गुणाः सन्ति, तथा तैः अचिन्त्याश्च गुणास्सन्ति। तथा दोषा अपि सन्ति किम्? न दोषाः। देवे दोषाः श्रुता एव न सन्ति। नापि चिन्त्याः। किमु वक्तव्यमचिन्त्याः दोषा न सन्तीति। जनितोत विष्णोः इत्यादौ दोषप्रतीतेः कथं न श्रुता इति चेत् अज्ञैः इति। मिथ्यादृग्भिर्हि तथा श्रुताः न तु ज्ञानिनां इति।

### ३. जगज्जन्मादिकर्तृत्वात् हरिः परतरः।

सकलगुणपूर्णतायां निर्दोषतायां च युक्तिः जगज्जन्मादिकारणत्वम्। ॐ जन्माद्यस्य यतः ॐ (१-१-२) भाष्ये च—

> उत्पत्तिस्थितिसंहाराः नियतिर्ज्ञानमावृत्तिः। (अज्ञानम्)
> बन्धमोक्षौ च पुरुषात् यस्मात्स हरिरेकराट्॥

इति स्कान्दे।

यतोवा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्र-यन्त्यभि संविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्मेति ।। (तै.अ.३-१) इतिश्रुतौ ब्रह्मशब्देन जीवग्रहणे बाधकरूपं जिज्ञास्यब्रह्मणः लक्षणमाह सूत्रकारः। अस्य प्रमितस्य जगतः। जन्मादि सृष्टचा-द्यष्टकं (न तु सृष्टचादित्रयमात्रं) यतः भवति (श्रुतं वा) तदेव ब्रह्म जिज्ञास्य मुच्यते। तल्लक्षणञ्च विष्णावेव संभवति न जीवे। अतः ब्रह्मशब्दस्य जीवेरूढत्वेपि बाधकसद्भावात् विष्णुरेव ब्रह्मपद मुख्यवाच्यः ।। तथा च जगज्जन्मादिकारणत्वं विष्णवेकनिष्ठम् ।। भारततात्पर्यनिर्णये १-८३

सृष्टिरक्षाहृतिज्ञान नियत्यज्ञानबन्धनान् ।

मोक्षश्च विष्णुतश्चैव ज्ञात्वा मुक्तिर्नचान्यथा ।। इति अष्टानामपि मुमुक्षुज्ञेयत्वात् अष्टानां उक्तिः। यतोवा इति वाक्ये सृष्टिः स्थितिः संहारः मुक्तिरिति चतुर्णामुक्तिः।

'चतुर्भिः साकं नवतिञ्च नामभिश्चक्रं न वृत्तं व्यतीरवीविपत्' (ऋक्संहिता १-१५५-६) इत्यत्र नियमनमुक्तम्। इतर-श्रुतिषु इतरे उक्ताः।

जगत्कारणत्वञ्च ब्रह्मणः न परिणाम्युपादानत्वेन। नापि विवर्तोपादानत्वेन। किन्तु पित्रादिवत् निमित्तत्वेनैवेति श्रुतिभिः दर्शयति। 'यो नः पिता जनिता योविधाता धामानि वेद भुवनानि विश्वा' (ऋ-सं-१०-८२-३

'यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः संभवन्ति ।
यथासतः पुरुषात्केशलोमानि
तथाऽक्षरात्संभवतीह विश्वम् ।। (अथर्वणोपनिषत् १ ७)

इत्यादि

ननु शिवादयः जगज्जन्मादिकर्तारः । सर्वज्ञत्वात् । व्यतिरेकेण यज्ञदत्तवत् इत्यनुमानात् विष्णोरन्ये जगत्कारणत्वेन कल्पनीयाः इति चेन्न । कुतः ?

ॐ शास्त्रयोनित्वात् ॐ १-१-३ भाष्यश्च—

नावेदविन्मनुते तं बृहन्तं (तै. ब्रा. ३-१२-९) औपनिषदः पुरुषः इत्यादि श्रुतिभ्यः जगत्कारणत्वम् नानुमानिकम् । तस्य शास्त्रैकसमधिगम्यत्वात् धर्मादिवत् इत्यनुमानमुक्तं भवति ।

ऋग्यजुः सामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानु[1]कूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो[2] ग्रन्थ विस्तारः नैवशास्त्रं कुवर्त्मतत् ॥

इति स्कान्दे ।

शास्त्रं वेदादि योनिः प्रमाणं यस्य तदिति बहुव्रीहिः । न तु तत्पुरुषः । समास प्राबल्यात् तत्पुरुष इति चेन्न । वेदादिशास्त्र-

---

1. मन्वादि शास्त्रम् । 2. पाशुपतं पशुपतिना कृतम् । योगः - हिरण्यगर्भोक्तः पातञ्जलः । सांख्यं भगवदन्यकपिलोक्तम् ॥

कर्तृत्व कथनस्यात्रानुपयुक्तत्वात् । न हि जगज्जन्मादि-कर्तृत्वे शास्त्रयोनित्वं हेतु । वैपरीत्यस्यैवोचितत्वात् । जग-ज्जन्मादिकारणत्वोक्त्याऽर्थलभ्यं सार्वज्ञं शास्त्रकर्तृत्वेन स्फोर-यति इति चेन्न । अनन्तजगन्निर्मागत्वोक्त्या अस्फुटीभूतं सार्व-ज्ञं तदेकदेशशास्त्रनिर्माणोक्त्या कथम विर्भवेत् ? तथा च विष्णोरेव जगत्कारणत्वेन शास्त्रगम्यत्वं, नेतरेषामिति सिद्धम् ।

ननु पाशुपतादिषु रुद्रादिः जगत्कारणत्वेन वेदादिशास्त्र-वेद्यः विश्वाधिको रुद्रः । एको रुद्रो न द्वितीयोऽवतस्थे इत्यादि नोच्यते पाशुपताद्युक्तिवेदप्रतीतिभ्यां रुद्रादेरपि जगज्जन्मा-दिकारणत्वे शास्त्रयोनित्वमस्तु । न विष्णोरेव इति चेन्न ।

ॐ तत्तुसमन्वयात् ॐ १-१-४. भाष्यश्च - उक्तश्चबृह-त्संहितायाम्—

उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।

उपक्रमादि तात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यम् । पाशुपतादि शास्त्रोक्तं वेदादिप्रतीतमपिनान्येषां शास्त्रयोनित्वम् । पाशुपताद्युक्तेः वेदादि शास्त्रनिर्णायकत्वाभावात्, उपक्रमादीना-मेव निर्णायकत्वात् । अन्वीयते स्वार्थेन संबध्यते, तत्परतया ज्ञायते, शास्त्रं शब्दो वा अनेनेत्यन्वयः उपपत्त्यादिलिङ्गम् । तैश्चसम्यक् शास्त्रे विचार्यमाणे विष्ण्वाख्यं ब्रह्मैवशास्त्रगम्यम् प्रतीयते न रुद्रादिः । अतोऽन्यथा प्रतीतेः अज्ञानमूलत्वात् ।

चन्द्रिकायाम्—

> आपातज प्रत्ययाश्च परस्परविरोधिनः ।
> अविरुद्धा प्रतीतिस्तु पूर्वापरविमर्शजा ॥
> नहीक्षुलेहनेनैव ज्ञात इक्षुरसो भवेत् ।
> न चेक्षुदण्डं निष्पीड्य लब्धः नैक्षुरसो भवेत् ? ॥
> अत्र १-३-२४. भाष्योक्तम्
>
> श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।
> पूर्वं पूर्वं बलीयःस्यादेवमागमनिर्णये ॥ इति स्कान्दे ।

श्रुत्यादिषट्कं च ग्राह्यम् । उदाहृतवाक्ये क्रमः अविवक्षितः ।

> वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा ।

इत्यनुव्याख्यानुसारेण, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यं अर्थं विप्रकर्षात् इति जैमिन्युक्तक्रमानुसारेण वा क्रमः ग्राह्यः ॥

ननु कर्मविधानादिरूपत्वात् शास्त्रस्य कथं विष्णुपरता इत्यतः भाष्यम्—

> मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्यइत्यहम् ।
> इत्यस्या हृदयं साक्षात् नान्यो मद्वेद कश्चन ॥
> इति भागवते ११-२१-४२ (श्रीधरीये पाठभेदः)

उद्धवं प्रतिश्रीकृष्णवचनम् । 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादि कर्मविधात्री श्रुतिः मां उद्दिश्यैव मत्पूजात्वेन कर्मविधत्ते । इन्द्राद्यभिधात्रीश्रुतिः मां अभिधत्ते मद्गुणान् (इदि-

परमैश्वर्ये) ऐश्वर्यादीन् अभिधत्ते । अहं विकल्प्यः विविधरूपतया विधेयः इति । चत्वारिवाक्परिमितापदानि तानि विदुः ब्राह्मणाः ये मनीषिणः ।

गुहात्रीणिनिहितानेङ्गयन्ति तुरीयं वाचो मनुष्यावदन्ति - इत्यादिश्रुतिः (ऋ-१-१६४-४५) वक्ति । वक्तृत्वात् वाक्शब्दितः हरिः । तस्य यानि परिमिता-परिमितानि स्थानापेक्षया परिच्छिन्नानि चत्वारि पदानि वासुदेवसंकर्षण प्रद्युम्नानिरुद्धाख्यरूपाणि तानि ये ब्राह्मणा मनीषिणः त एव विदुः । तत्र वाचः वचः वाक्शब्दितहरेः, गुहा हृदयाख्यगुहायां निहिता निहितानि, त्रीणिवासुदेवादि त्रीणिरूपाणि, मनुष्याः साधारणाः नेङ्गयन्ति न जानन्ति । तुरीयं अनिरुद्धाख्यं तु वदन्ति जानन्ति इतिश्रुत्यर्थः । अहं अपोह्यः नसुरां पिबेत् इत्यादि वाक्येन अप्रियात् इति शेषः । अथवा

सुराहरेर्गुणाः प्रोक्ताः ते मे स्युरिति चिन्तनम् ।
सुरापानमिति प्रोक्तं तन्न कुर्यात्कदाचन ॥ इति ।

मम अप्रीतिकरात् सुरापानशब्दितात् एवं रूपचिन्तनात् अपोह्यः । इत्यस्याः एवंभूतायाः विधिनिषेधादिरूपायाः अन्यपरत्वेन प्रतीतायाश्चास्याः श्रुतेः हृदयं तात्पर्यं अहमेव वेद जानामि । मदन्यः कश्चन कोऽपि विशेषतः प्रायः न वेद ।

ननु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति तैत्तिरीयके (२-४-१) वेदाः वागिन्द्रियाणि च मनोरूपेन्द्रियेण सह तद्विषयकवृत्तिज्ञानं अजानन्त्य एव निवर्तन्त इति विष्णोर-

वाच्यत्वम् अज्ञेयत्वञ्चोच्यते । 'अशब्दमस्पर्शमरूपमव्ययं' इति काठके (३-१५) शब्दप्रमाणाविषयः इति अशब्दपदेनोच्यते । अतः कथं तस्य शास्त्रमुख्यार्थत्वं जगज्जन्मादिकारणत्वञ्चेति चेत् ।

ॐ ईक्षतेर्नाशब्दम् ॐ १-१-५ भाष्यञ्च—

तत् ब्रह्म (विष्ण्वाख्यं) शब्दवाच्यं न ईक्षणीयत्वात् । ज्ञानविषयत्वात् । परात्परं पुरिशयं पुरुषमीक्षते (प्र-५-५) आत्मन्येवात्मानं पश्येत् (बृहदा ६-४-२१) इत्यादिषु ज्ञेयत्वस्योक्तत्वात् । औपनिषदत्वात् न अवचनेनेक्षणम् । वचनेतरप्रमाणाभ्यां प्रत्यक्षानुमानाभ्यां न ज्ञायते । किन्तु वचनेनैवेक्षणं वाच्यत्वमेव साधयति । किञ्च— "सर्वे वेदायत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति" । (कठ-२-१५)

"वेदैश्चसर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम् ।"

(गीता १५-१५)

इत्यादि श्रुतिस्मृतिभ्यश्च वाच्यमेव । अतः शास्त्रमुख्यार्थत्वं जगज्जन्मादिकारणत्वञ्च विष्णोरेवेति सिद्धम् ।

'यतो वाचो' इत्यादिश्रुतेः का गतिः ? इति चेत् अवाच्यत्वादिकं तु अप्रसिद्धत्वात् । साकल्येन वाचकशब्दशून्यत्वं तस्याः श्रुतेरर्थः ।

श्रुतेः अर्थः ।

न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यन्तोपि न पश्यन्ति मेरो रूपं विपश्चितः ॥ इतिवत्

यथा मेरोः रूपे अप्रसिद्धिरूपक अवाच्यत्वादिव्यपदेशः तथा ब्रह्मण्यपि इति भावः । अद्भुतत्वादवाच्यं तत् इत्यनुव्याख्याने ।

४. सर्वशब्दवाच्यत्वाद्धरिः परतरः ।

एवं शास्त्रावगम्यत्वे विभागेन समन्वयम् । (विस्तरेण)

आनन्दमय इत्यादिनाऽध्यायेन वदत्यजः ॥ (अनुव्या)
न केवलं वाच्यः नेति न, किन्तु सर्वशब्दवाच्यश्चेति (यदुक्तं) विष्णोः सकलगुणपरिपूर्णत्वं, तत् सर्वशब्दानां समन्वये एव सिध्यति । अतः) आनन्दमयाधिकरणमारभ्य समस्तेनाध्यायेन प्रायेणान्यत्र प्रसिद्धः, उभयत्र प्रसिद्ध, अन्यत्रैव प्रसिद्धनामलिङ्गात्मकानां, आनन्दादिगुणवाचिनां, आनन्दमयादिगुणिवाचिनां अधिदैवगतानां इन्द्रादीनां, अधिभूतगताकाशादीनां, अध्यात्मगत प्राणादीनां, तत्तत्सूक्तगतज्योतिरादीनां अधिवेदगतगायत्र्यादीनां शब्दानां विष्णौ समन्वयः क्रियते समस्तशब्दैः परममुख्यवृत्त्या वाच्यः विष्णुरिति निरूप्यत इत्यर्थः ।

अनुव्याख्याने (१-१-६)

आसमन्तात्काशतेयत् आकाशो मुख्यतो हरिः ।
बल[1]ज्ञान[2]स्वरूपत्वात् वायुः नविश्वम्[3] ॥
आपः आपालनाच्चैव पृथिवी प्रथितो यतः ।
[4]उष्टानामाश्रयत्वेन स एवौषधि नामकः ॥

---

1. व शब्दार्थः, 2. आयु शब्दार्थः । 3. न गच्छति इति विश्वम् ।
दग्धानां ओषाः दग्धाः धीयन्ते अस्मिन्निति ॥

(अद्यते अत्ति च भूतानि तस्मादन्नं तदुच्यते ।)
पुरिशेते यतः सोऽयं पुरुषश्चेति गीयते ॥

१-३-३ भाष्ये- ब्रह्माण्डे च

रुजं द्रावयते यस्माद्रुद्रः तस्माज्जनार्दनः ।
ईशानादेव चेशानो महादेवो महत्त्वतः ॥
पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात् ।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥
शिवः सुखात्मकत्वेन शर्वः शंरोधनाद्धरिः ।
कृत्यात्मकमिमं देहं यतोवस्ते प्रवर्तयन् ॥
कृत्तिवासाः ततोदेवः विरिञ्चश्च विरेचनात् ।
बृंहणाद्ब्रह्मनामासौ ऐश्वर्यादिन्द्र उच्यते ॥
एवं नानाविधैः शब्दैः एक एव त्रिवि[1]क्रमः ।
वेदेषु सपुराणेषु गीयते पुरुषोत्तम.[2] ॥

वामने च—

न तु नारायणादीनां नाम्नामन्यत्र संभवः ।
अन्यनाम्नां गतिर्विष्णुः एक एव प्रकीर्तितः ॥ इति ।

स्कान्दे च—

ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान् राजेवर्तेस्वकं पुरम् ॥ इति ।

---

1. त्रिभुवनार्थ शब्दव्यापी हि । 2. सर्वपुधुष शब्दस्वामी हि इति सर्वशब्द-मुख्यवाच्यत्वोपपादकम् ॥

ब्राह्मे— चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति ।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ॥
विशेषनामानि ददौ स्वकीयान्यपि [1]केशवः ॥

विष्णोः मुख्यतः सर्वनामवाच्यत्वे श्रुतयः । (भाष्ये १-१-१)

'नामानि विश्वाऽभि नसन्तिलोके यदाविरासीदनृ[2]तस्यसर्वम् ।
नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ॥
इति भाल्लवेय श्रुतिः

यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या (ऋ १०-८२-३) इत्येवशब्दान्नान्येषां रुद्रादीनां विष्णवादि सर्वशब्दवाच्यत्वं, तत्र प्रमाणाभावात् ॥ भाष्ये १-४-२४

हन्त एतमेव पुरुषं सर्वाणि नामानि अभिवदन्ति । यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्ति । एवमेवैत।नि नामानि सर्वाणि पुरुषमभिविशन्ति ॥ इति ।

नन्वेवं सति निषेधमुखवेद्यवस्तुवाचकशब्दैः दोषवाचि सर्वेश्वरत्वविरोधि दुःखबद्धावरादिशब्दैश्च कथं निरनिष्टो निरवद्यः इति श्रुत्युक्तः वाच्यः? इति चेत्—
१-४-२९ भाष्ये

एषह्येव शून्यः, एषह्येवतुच्छः, एषह्येवाभावः, एषह्येवाव्यक्तः । अदृश्योऽचिन्त्यो निर्गुणश्चेति महोपनिषदि शून्यादि शब्दवाच्यत्वं श्रुतम् । तच्छब्दानां विष्णौ रूढिः ।

---

1. कः - ब्रह्मा । ईशः - रुद्रः । तौ वर्तयति इति तयोः स्वामी ।
2. विष्णिवतरस्य ।

योगवृत्तिमपि स्मृत्या दर्शयति—

शमूनं कुरुते विष्णुः अदृश्यः सन् परः स्वयम् ।
तस्माच्छून्य इति प्रोक्तः तोदनात्तुच्छ उच्यते ॥
नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः ।
अतोऽभावं वदन्त्येनं नाश्यत्वात् नाश इत्यपि ॥
सर्वस्य तदधीनत्वात् तत्तच्छब्दाभिधेयता ॥

अन्येषां व्यवहारार्थं इष्यते व्यवहर्तृभिः ॥ इति महाकौर्मे । परः सन्नेव सर्वोत्तमत्वेन पूर्णसुखत्वेन सन्नेव-शं-अन्यसुखं ऊनं स्वसुखादल्पं करोति । तस्माच्छून्यः । अदृश्यः सन् तोदनात्तुच्छः उच्यते इत्यन्वयः । छः छन्नः दुर्जनैरदृश्यः सन्नेव । तोदवात् - दुःखकर्तृत्वात् तुत् । अतः तुच्छः । भावयितुमुत्पादयितुं वा । अश भोजने । अश्यत्वं भक्ष्यत्वम् । नञा संबन्धेन अभक्ष्यत्वात् ।

तथा चासच्छून्यादिशब्दप्रवृत्तिनिमित्तस्य ॐ तदधीनत्वात् अर्थवत् ॐ (१-४-३) भगवत्स्वामिकत्वात् तत्तच्छब्दवाच्यता तस्यैव ॥ शब्दप्रवृत्तिनिमित्तनित्यत्वं, तदधिकरणत्वं चेति निमित्तद्वयम् । दुःखबद्धावरादि दोषवाचिशब्देषु प्रवृत्तिनिमित्तनियन्तृत्वमेकमेव निमित्तम् ।।

यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते ।

यथा जीवः परात्मेति यथा राजा जयीत्यपि ॥ इति च स्कान्दे । यस्य शब्दस्य प्रवृत्तिनिमित्ताख्यः गुणः यस्याधीनः सः तद्गुणवान् इत्युच्यते । तत्र वैदिकदृष्टान्तः विष्णुः छान्दोग्ये-

अनेन जीवेन आत्मनाऽनुप्रविश्य-इत्यादौ, जीवो विनयिता-साक्षी-इति विष्णुसहस्रनामसु च जीवशब्देनोच्यते। लौकिक-दृष्टान्तः - सेनागतजयस्य जयिशब्दप्रवृत्तिनिमित्तस्य राजाधी-नत्वात् राजा जयी इत्युच्यते इति ॥

अनुव्याख्याने—

दुःखिबद्धावराद्यास्तु तदधीनत्व हेतुतः।
शब्दाः ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः ॥
स्वातन्त्र्यं तद्गतत्वञ्च शब्दवृत्तेर्हि कारणम्।
स्वातन्त्र्यं तत्र मुख्यं स्यात्कुतो राज्ञि जयोऽन्यथा ॥

एवं (ऐतरेये) तावा एताः सर्वाः ऋचः सर्वे वेदाः सर्वेघोषाः एकैव व्याहृतिः प्राण एव। भाष्ये च—

सर्वैश्च वैदिकपदैरपि लोकशब्दै-
मेंघाग्निवारिधितलादिभवैश्च सर्वैः।
एकोऽभिधेय परिपूर्ण गुणःप्रियोऽलं
नारायणः मम सदैव सुतुष्टि मेतु ॥

एवमशेषस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वं ततो जगज्ज-न्मादिकारणत्वं मुख्यानन्तगुणत्वञ्च सिद्धम्। तथा ब्रह्मसूत्र-भाष्यद्वितीयाध्याये युक्ति समय श्रुति न्यायोपेतश्रुतिभेदात् प्रवृत्तं चतुर्विधविरोधं परिहृतत्वात्।

अतो निर्दोष निःशेष कल्याणगुणलक्षणः।
श्रीमान् नारायणस्सिद्धः वैरगन्धोऽपि नात्र हि ॥

विष्णुतत्वनिर्णये-(अणुसुधेति भूयसीं प्रसिद्धि गते) १ परिच्छेदे विष्णोः सर्वोत्तमत्व एव महातात्पर्यं सर्वागमानाम् ।

तथा चोक्तं भगवता । गीता १५-१६-२०

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात्क्षरमतीतोऽहं अक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तः ॥

यो मामेवमसंमूढः जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥

इति गुह्यतमं शास्त्रं इदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥

"सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थः ततोऽतः ॥" इति पैङ्गी श्रुतिः ।

मुख्यश्च सर्ववेदानां तात्पर्यं श्रीपतेः परम् ।
उत्कर्षे तु तदन्यत्र तात्पर्यं स्यादवान्तरम् ॥

इति महावराहे ।

सर्वोत्तमत्वे युक्तिः । मोक्षो हि सर्वपुरुषार्थोत्तमः ।

धर्मार्थकामाः सर्वेऽपि न नित्या मोक्ष एव हि ।
नित्यस्तस्मात्तदर्थाय यतेत मतिमान्नरः ॥

इति भाल्लवेय श्रुतिः ।

मोक्षश्च विष्णुप्रसादेन विना न लभ्यते ।

यस्य प्रसादात् परमार्तिरूपात् अस्मात्संसारान्मुच्यते नापरेण ।
नारायणोऽसौ परमो विचिन्त्यः मुमुक्षुभिःकर्मपाशादमुष्मात् ॥

इति नारायण श्रुतिः ।

नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः तस्यैव आत्मा विवृणुते तनूं स्वाम् ॥

इति कठश्रुतिः ।

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥

इति गीता १२-१७

उत्पत्तिस्थितिसंहारा. नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषात् यस्मात्स हरिरेकराट् ॥

इति स्कांदे

अज्ञानां ज्ञानदो विष्णुः ज्ञानिनां मोक्षदश्च सः ।
आनन्ददश्च मुक्तानां स एवैको जनार्दनः ॥

अनुव्याख्यानम्

बन्धको भवपाशेन भवपाशाच्च मोचकः ।
कैवल्यदः परं ब्रह्म विष्णुरेव न संशयः ॥ इति च ।

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥

भागवते २-३-१०

प्रीतिश्च गुणोत्कर्षज्ञानादेव विशेषतो दृष्ट्वा ।

धातयन्ति हि राजानः राजाऽहमिति वदन्तम् ।
ददाति च सर्वमभिप्रेतं गुणोत्कर्षं वदतः ॥

न तादृशी प्रीतिरीड्यस्य विष्णो गुणोत्कर्षज्ञातरियादृशी स्यात् ।
तत्प्रीणनात् मोक्षमाप्नोतिसर्वः ततो वेदाः तत्पराः सर्व एव ॥

इति सौपर्णश्रुतिः ।

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥

इति गुणोत्कर्षज्ञानादेव परमाप्रीतिः भगवता स्वयमेवाभिहिता ।
अतो विष्णोः गुणोत्कर्ष एव सर्वश्रुतिस्मृतीनां तात्पर्यम् ॥

**विष्णुतत्वनिर्णये द्वितीयपरिच्छेदे—**

(स्वरूपप्रभृति प्रवृत्तिलक्षणसत्तात्रैविध्ये परापेक्षमस्वतन्त्रम् । परानपेक्षं स्वतन्त्रम् । स्वतन्त्रो भगवान् विष्णुः । अन्यत्सर्वमस्वतन्त्रम् ॥ )

चेष्टाप्रदश्च सर्वेषामेक एव परो हरिः ।
तस्य नान्योऽस्ति सर्गादिकर्ता निर्दोषकश्चसः ॥

इति परमश्रुतिः ।

विष्णुः निर्दोषः । अन्ये सदोषाः ।
ब्रह्मशेषसुपर्णेश शक्रसूर्य गुहादयः ।

सर्वेक्षराः अक्षरा तु श्रीरेका तत्परो हरिः॥ इति स्कान्दे ब्रह्मादयः शरीरक्षरणात् क्षराः देहनाशवन्तः जनवन्तश्य लक्ष्मीः परमात्मवत् नित्यमुक्ता देहनाशशून्या जडदेहरहिता। देशकालाभ्यामेव (न तु गुणैः) परमात्मना समव्याप्ता तस्याः अपि परो हरिः॥

यं कामयेतं तमुग्रं कृणोमि। तं ब्रह्माणं, तमृषिं तं सुमेधाम्॥
अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवाउ॥
अहं जनाय समदं कृणोम्यहं द्यावा पृथिवी आविवेश॥

इति अंभ्रणीसूक्ते लक्ष्म्याः सकाशात् ब्रह्मरुद्रादि देवानां तत्तत्पदप्राप्तिः। ब्रह्मणः पञ्चममुखच्छेत्तुः रुद्रस्य तया संहार्यत्वं चोच्यते॥ अस्य देवस्य मीड्ढुषो राया विष्णोरेषस्य प्रभृते हविर्भिः।

विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिः अश्विना विरावन्।
इति श्रुतौ विष्णोः प्रसादादेव रुद्राश्विनीदेवानां पदप्राप्तिरुच्यते।

चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥

इति पुरुषसूक्ते विष्णोः सकाशात् चन्द्रादिदेवानां जनिरुच्यते।

एकोनारायण आसीत्। न ब्रह्मा न च शङ्करः॥
(नारायणसूक्ते)

वासुदेवो वा इदमग्र आसीन्नब्रह्मा न च शङ्करः।
नेन्द्रसूर्यौ न च गुहा न सोमो न विनायकः॥

इत्यादि श्रुतिषु प्रलये विष्णोरेवावस्थानमन्येषां देवानां अभावश्चोच्यते ।

नमानि सर्वाणि यमाविशन्ति तं वै विष्णुं परमं उदाहरन्ति ।
अस्यैव सर्वनामानि व्यतिरिक्तस्य सर्वतः ।
यः स्वतन्त्रः सदैवैकः सविष्णुः परमो मतः ॥

इत्यादि श्रुतिभ्योऽन्य नामानि अस्यैवेति नान्येषां सर्वेश्वरत्वादिकं उच्यते । सर्ववेदेष्वपि अस्य दोषवचनात्, आदौ अभावा वचनाच्च, तद्वचनाच्चान्येषां सर्वेषां वेदेषु सर्वेषु ॥ तेषां सर्वनामानुक्तेश्च हरिः परतरः ॥

ननु विष्णोरपि उत्पत्तिरुच्यते । तत्कथं तस्य निर्दोषत्वादिकम् ?

उत्पत्तिर्वासुदेवस्य प्रादुर्भावः न चापरः ।
देहोत्पत्तिस्तदन्येषां ब्रह्मादीनां तदीरणात् ॥
(वासुदेवप्रेरणात्)
देहोऽनादिः हरेर्नित्यो ब्रह्मादीनामनित्यकाः ।
मुख्योत्पत्तिस्तदन्येषां प्रादुर्भावो हरेर्जनिः ॥
इति परमश्रुतेः ॥

रुक्मिणीश विजय महाकाव्ये-१—
स्तुतिं सपित्रोरवधार्ययोऽसौ बभूव पश्चात् शिशुवेषधारी ।
असूत तं कानु तदा मृगाक्षी पुरा पुराणाकृतिमप्रमेयम् ॥ ५१ ॥
यदीहजातो वसुदेव वीर्यात्तदा कुतस्तस्य विभूषणानि ।
वराम्बरं कौस्तुभरत्नमुच्चत्सुदर्शनं शङ्खगदादिजातम् ॥ ५२ ॥

यदा नृसिंहाकृतिराविरासीत् पदा[1]हतः स्तंभवराद्धिपूर्वम् ॥
तदा नु का स्त्री सुषुवे मुकुन्दं स कस्य वीर्यादजनिष्ट कायः ॥
वि-त, नि-३ परिछेदे–

नारद उवाच — निर्दोषश्चेत्कथं विष्णुर्मानुषेषूदपद्यत ॥

ब्रह्मोवाच— स्त्रीपुंमलाभियोगात्मा देहो विष्णोर्न जायते ।
किन्तु निर्दोष चैतन्यसुखां नित्यां स्वकां तनुम् ॥
प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।
तथाप्यसुरमोहाय परेषां च क्वचित् क्वचित् ॥
दुःखाज्ञानश्रमादीन् सः दर्शयेत् शुद्धसद्गुणः ॥

दौर्लभ्यायैव मोक्षस्य दर्शयेत्तान्यजो हरिः ।
मिथ्यादर्शन दोषेण तेन मुक्ति न यान्ति च ॥
तमो यान्ति च तेनैव तस्माद्दोषविवर्जितम् ।

प्रादुर्भावगतं चैव जानीयाद्विष्णुमञ्जसा ॥ इति ब्रह्माण्डे ॥

इतिहासपुराणादिषु हरेः परतरत्वम् —

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

भारतम्- रुद्रं समाश्रिता देवाः रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मां आश्रितो नित्यं नाहं किञ्चिदुपाश्रितः ॥

आश्वमेधिकपर्व - ११८ अ-३७ श्लो- Kumbakonam Edition

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥

---

1. भागवते स्वमुष्टिनेत्युक्तत्वेपि युगकल्प व्यवस्थया अविरोधः ॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

हरिवंशेषु— वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ इति ।

ब्राह्मे च ब्रह्मवैवर्ते (१·१-१ भाष्ये) ब्रह्मवचनम्—

नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः ।
बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः ॥ इति ।

भागवते—४-३-२२-२३ रुद्रः स्वपत्नीं सतीं प्रति ।

प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधु मिथः सुमध्यमे ।
प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥
सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमान् अपावृतः ।
सत्त्वं च यस्मिन् भगवान् वासुदेवः ह्यधोक्षजोमे मनसा
विधीयते ॥ भागवते ४-७-२९ हरिं प्रति

तव वरद वराङ्घ्रौ आशिषा चानभिद्ये ह्यपि मुनिभिरसक्तैः आदरेणार्हणीये । यदि रचितधियं मां विद्धि लोकापविद्धं जगति न गणयेऽन्यं त्वत्परानुग्रहेण ॥

(श्रीधरीये पाठभेदः)

त्रिलोचनमतायास्मै को वा द्रुह्येत् द्विलोचनः । युक्ति-मल्लिका । हरेः परतरत्वबोधककथाः युक्तयश्च—

१. यदा यदा असुरादिभिः पीडादिः तदातदा इन्द्रा-दयः देवाः ब्रह्माणं शरणं गच्छन्ति । सोऽपि स्वपारतन्त्र्यं प्रद-

र्शयन् रुद्रेण तैश्च सह श्वेतद्वीपं दुग्धाब्धिस्थं गत्वा नारायणं शरणं व्रजन्ति । तत्स्तुतिभिः प्रसन्नः भगवानवतीर्य तदभीष्टं कुर्वन् दुष्टनिग्रहं शिष्टपरिपालनं धर्मसंस्थापनं, सर्वस्मादुपरि

भवेऽस्मिन् क्लिश्यमानानां अविद्याकामकर्मभिः ।
श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥ इत्युक्त

लीलाश्च करोति । न केवलं दशावताराः । किन्त्वसंख्येयाश्च । एतादृशवैभवः विष्ण्वतिरिक्तस्य कस्यापि नास्ति ॥

भागवते ७-१०-५१ to ७१

प्रह्लादचरितनिरूपणानन्तरं श्रीहरिः यथा स्वभक्तं प्रह्लादं अरक्षत्तथा रुद्रमप्यरक्षत् इनि नारदः त्रिपुरदहनाख्यानं कथयति । विस्तरभियोपयुक्तश्लोका एवोदाह्रियन्ते ॥

विलोक्य भग्नसंकल्पं विमनस्कं वृषध्वजम् ।
तदायं भगवान् विष्णुः तत्रोपायमकल्पयत् ॥
वत्स आसीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ।
प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥
अथासौ शक्तिभिः स्वाभिः शंभोः प्राधानिकं व्यधात् ।
ददाह तेन दुर्भेद्याः हरोऽथ त्रिपुरो नृप ॥

आख्यानेऽस्मिन् रुद्रस्य त्रिपुरदहनेऽशक्तत्वं, वैष्णवानां यथाशंभुः पुराणानामिदं तथा (भा-१२-१३-२३) इति प्रसिद्धस्वभक्त रक्षणं च स्पष्टम् ॥

भागवतं ८-४-३० गजेन्द्रमोक्षाख्याने—

एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्ग-भिदाभिमानाः । नैते यदोपससृपुः निखिलात्मकत्वात् तत्राखिलामरवरो हरिराविरासीत् ॥

अत्र गजेन्द्रेण स्वकृतस्तोत्रे उपवर्णिताः, आदिबीजत्व, परेशत्व, चिदचित्सर्वजगत्स्रष्टृत्व, पालकत्व, संहर्तृत्व, महाप्रलयावस्थान, मोक्षस्वामित्वादि अनन्तकल्याणगुणाः हरावेव-सन्ति, नान्येषु । ब्रह्मरुद्रेन्द्रादिदेवाः सर्वे एतत्तत्वं जानन्तः वाहं नाहं नचाहं न च भवति पुनस्तादृशो मादृशेषु - इति तद्रक्षणाय नागमन् । सर्वोत्कृष्टः हरिरेवागत्य रक्षितवान् ॥
भागवते १०-८८-१३ to ४० वृकासुराख्यानम् ।

वृकासुराय गिरिशः वरं दत्वाऽऽप सङ्कटम् ।
यस्ययस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥
ॐमिति प्रहसन् तस्मै ददेऽहेः अमृतं यथा ।
इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः ॥
स तद्वरपरीक्षार्थं शंभोर्मूर्ध्नि किलासुरः ।
स्वहस्तं धातुमारेभेसोऽबिभ्यत्स्वकृताच्छिवः ॥
ततो वैकुण्ठमगमत् भास्वरं तमसः परम् ।
अजानन्तः प्रतिविधिं तूष्णीमासन् सुरेश्वराः ॥
दूरात् प्रत्युदियात् भूत्वा वटुको योगमायया ॥
यो दक्षशापात् पैचाच्यं प्राप्तः प्रेत-पिशाचराट् ।
यदि वस्तत्र विश्रंभः दानवेन्द्र जगद्गुरौ ॥
तह्यंगाशु स्वशिरसि हस्तंन्यस्य प्रतीयताम् ।
अथापतत् भिन्नशिराः वज्राहत इव क्षणात् ॥

गिरित्रमोक्षं कथयेत् शृणोति वा विमुच्यते संसृतिभिः तथाऽरिभिः ॥

भागवते १०-८९-१ to २० श्लो-

सरस्वत्यास्तटे राजन् ऋषयः सत्रमासत ।
वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥
तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ।
तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगात् ब्रह्मणः पदम् ॥
स आत्मन्युत्थितं मन्युं आत्मजायात्मना प्रभुः ।
अशीशमत् यथावह्निं स्वयोन्या वारिणाऽऽत्मभूः ।
ततः कैलासमगमत् ........ ॥
शूलमुद्यम्य तं हन्तुं आरेभे तिग्मलोचनः ।
अथो जगाम वैकुण्ठं ......... ।
शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ॥
पुनीहि सह लोकं मां लोकपालांश्च मद्गतान् ।
वत्स्यत्युरसि मे भूतिः भवत्पादहतांहसः ।
पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ।
स्वानुभूतमशेषेण राजन् भृगुरवर्णयत् ॥
भूयांसं श्रद्दधुः विष्णुं यतः शान्तिः यतोऽभयम् ॥

अत्र क्रोधः महान् रिपुः । तं जेतुं ब्रह्मरुद्रौ अशक्तौ । हरिस्त मजयत् । ब्रह्मरुद्रयोरपि विशेषोऽस्ति । ब्रह्मा उत्थितं क्रोधं अशमयत् । रुद्रस्तु नेति प्रमेयजातं व्यक्तम् ॥

यत्तु मोक्षप्रदस्य काशीक्षेत्रस्य शिवक्षेत्रत्व प्रसिद्धेः शिवस्यैव मोक्षदातृत्वमिति । तन्न । जाबालश्रुतौ रामोपनिषदि च

"जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकब्रह्ममन्त्रं व्याचष्टे । येनासावमृती भूत्वा मोक्षीभवती"ति ।। राम मन्त्र प्रभावादेव । तत्र हि–श्रीराममन्त्रं काश्यां वै जजाप वृषभध्वजः ।

मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः ।।
ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम् ।
वृणीष्व यदभीष्टं ते दास्यामि परमेश्वर ।।

रुद्रः– मणिकर्णे महाक्षेत्रे गङ्गा भुवि तटे पुनः ।
म्रियन्ते ये प्रभो देहि मुक्तिं नातो वरान्तरम् ।।

रामचन्द्रः-मुमुक्षोः दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।

उपदेक्ष्यामि मन्मन्त्रं स मुक्तो भविता शिव ।। इति अत एव काशीखण्डे—

पायं पायं श्रुतिचुलकितं रामनामामृतं यत्
ध्यायं ध्यायं मनसि सततं ब्रह्मतत्तारकाख्यम् ।
जापं जापं प्रकृति विकृतौ प्राणिनां कर्णमूले
वीथ्यां वीथ्यामटतिजटिलः कोऽपि काशीनिवासी ।। इति

यद्यपि हरिः परतर इत्यत्र बहुवक्तव्यमस्ति तथापि विस्तरभिया इदं समाप्य सत्यं जगदिति प्रमेयं निरूपयामः ।।

अन्या वाचो विमुञ्चत - (मुण्ड-२-२ ५) पूजयेन्नान्यदेवताः इत्यादिना रमाब्रह्मादीनां सर्वोत्तमत्वेन पूजैव निषिद्धा न तु परिवारत्वेन । अत एव—

सर्ववर्णाश्रमैर्विष्णुरेक एवेज्यते सदा ।
रमाब्रह्मादयस्तस्य परिवारतयैव तु ।

तेषामपि तत्तद्योग्यतानुसारेणोपासना परिचर्या नमस्कारादि-कृत्वा भागवतानुग्रहः सम्पादनीयः इति ज्ञेयम् ।।

## २. सत्यं जगत्

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ।। '१६ अ.
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। ९ ।।
इति गीतासु हरिणा जगन्मिथ्यात्ववादिनाम् ।
जगतः क्षयकृत्ता च जगतोऽहितता तथा ।।
उक्ता सोऽपि जगत्कर्ता हर्ता चोत्पथवर्तिनाम् ।
अतोऽतिभीतो सज्जोऽहं जगत्सत्यत्वसाधने ॥

जगन्मिथ्यात्ववादानां बहुत्वेन तत्र कांश्चिदेवानूद्य तदनुपप-न्नत्वं प्रदर्श्य जगत्सत्यत्वं स्थापयामः ।।

स्वप्नं दृष्टान्तीकृत्य यथा स्वप्नः मिथ्या तथा जगद-पीत्याहुः । ननु स्वप्नविषयस्य सत्यत्वे पूर्वोत्तरकालं दर्शन-प्रसङ्गः । न च तदा दृश्यते । तत्काल एव सृष्टि निरोधपक्षे च प्रागुत्तरकालं मृत्पिण्डकपालादीनि दृश्येरन् । न च दृश्यन्ते । कर्त्रुपादाननिमित्तानां अभावाच्च प्रतीतिकाल एव सृष्टि-निरोधाविति न । न च प्रतीति कारणं वा अस्ति । इन्द्रिय-

वृत्तीनामुपरतत्वात् । अतः प्रातीतिकत्वात् मरुमरीचिका जला-दिवत् इति । तदनुपपन्नम् ।

ॐ सन्ध्येसृष्टिराह हि ॐ ॐ निर्मातारं चैके पुत्रादयश्च ॐ

ॐ मायामात्रं तु कात्स्न्र्येनाभिव्यक्तस्वरूपत्वात् ॐ

ॐ सूचकश्च हि श्रुतेः आचक्षते च तद्विद. ॐ (३-२-१ to ४) इति सूत्रचतुष्टये स्वाप्नपदार्थानां सत्यत्वं, परं तत्र प्रतीतं यत् जागरानुभूतपदार्थैरैक्यं, घटादीनां मृदाद्युपादानकत्वं जलाहरणाद्यर्थक्रियाकारित्वञ्च भ्रान्तिरिति समर्थितम् । अथ रथान् रथयोगान् पथः सृजते (बृ. ६-३-१०) इत्यादि श्रुतेः स्वाप्नाः हरिणा सृज्यन्ते । नाश्यन्ते च । परमात्मा च कर्ता । जीवमनोगताः संस्काराः पूर्वानुभूतवस्तुविषयकाः उपादानम् । स्वेच्छयैव निमित्तकारणम् । वासनामयत्वेन सूक्ष्मत्वात्सम्यगभिव्यक्तिराहित्यस्वरूपत्वं तेषाम् ।

मनोगतांश्च संस्कारान् स्वेच्छया परमेश्वरः ।
प्रदर्शयति जीवाय स स्वप्न इति गीयते ।। इति ब्रह्माण्डे

यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता ।
अनभिव्यक्तस्वरूपत्वात् नान्यसाधनजं भवेत् ।। इति च ।
यदाकर्मसुकाम्येषु स्त्रियं स्वप्नेऽभिपश्यसि ।
समृद्धिं तत्र जनीयात्तस्मिन् स्वप्ननिदर्शने ।।

इति श्रुतेः । छा-५-२-९

बाह्यकारणजन्यत्वाभावेऽपि शुभाशुभ सूचकत्वेन सत्याः । न हि अविद्यमानं (शशशृङ्गादि) शाकुनं कस्यचित् सूचकं भवति ।

यतः ईश्वरः दर्शयति अतो न असत्वं शंकार्हम् । न च प्रदर्शनेन प्रयोजनाभावः । शुभाशुभसूचकत्वाय प्रदर्शयति ।

एवं स्वप्नानां सत्यत्वात् तद्दृष्टान्तेन जगतः मिथ्यात्वं न युक्तम् ।

अनित्यत्व विकारित्व पारतन्त्र्यादिरूपतः ।
स्वप्नादिसाम्यं जगतः न तु बोधनिवर्त्यता ॥
सर्वज्ञस्य यतो विष्णोः सर्वंदैतत्प्रतीयते ।
बोधासहं ततो नैतत् किन्त्वाज्ञावशमस्य हि ॥

इति परमोपनिषदि ।

वैराग्यार्थं आस्थानिवृत्त्यर्थं हि स्वप्नादि साम्योक्तिः । अनित्यत्वादौ ज्ञापितेपि आस्था निवर्तते एव । तत्किं प्रमाणविरुद्ध-मिथ्यात्वकल्पनेन इति भावः ।

ॐ अवैधर्म्याच्च न स्वप्नादिवत् ॐ २-२-२९
स्वप्नवैधर्म्यमुदितं तस्मादपि न तन्मतम् ॥

विमतं मिथ्या दृश्यत्वात् । यदित्थं तत्तथा । यथा संप्रतिपन्नं - इत्यनुमानेन प्रपञ्चमिथ्यात्वं साधयति । सर्वं मिथ्येत्युक्ते ब्रह्मणि प्रमाणबाधः । शुक्तिरजतादौ सिद्धार्थता-चस्यादिति विमतमित्युक्तम् । विमतेः अनेक विधत्वेऽपि साध्य-विशेषोपादानात् तद्विशेषसिद्धिः । तथा च मिथ्यात्वसत्यत्वाभ्यां वादिप्रतिवादि विमति विषयः वियदादि इत्युक्तं भवति इत्यादि-पञ्चावयव वाक्यम् ।

एतत् अनेकदोषदुष्टम् । मिथ्यात्वं नाम असत्वम् ।

जगतः अभावात् आश्रयासिद्धः पक्षः। अथवा जगत असत्वे प्रतिज्ञाते अपसिद्धान्तं अनेन व्याचष्टे। तथा हि - पक्षः प्रतिज्ञार्थः। प्रपञ्चस्यासत्वलक्षणः आश्रयासिद्धः तद्विरुद्ध इति यावत्। कुतः? जगतो भावात्। भावत्वेनासद्विलक्षणत्वेन परेणाङ्गीकृतत्वात्। न वयं मिथ्येति अत्यन्तासङ्गतं गगनकुसुमसमं प्रपञ्चं आचक्ष्महे। किन्त्वनिर्वचनीयमेवेति चेत् - अनिर्वचनीयासिद्धेः अप्रसिद्धविशेषणः पक्षः। अनिर्वचनीयंखलु निर्वचनानर्हं उच्यते। न च तत् प्राक् एतदनुमानात् सिद्धम्। सर्वस्यापि निर्वचनार्हत्वात्। अन्यथा स्वव्याघातः मूकता वा स्यात्।

ननु सदसद्वैलक्षण्यमेव मिथ्यात्वं ब्रूमः। नासत्वम्। एतदेवानिर्वचनीयत्वं नाम। न तु सर्वथा निर्वचनानर्हत्वमेव अतो नोक्तदोष इति चेत्। सदसद्वैलक्षण्ये मिथ्यात्वे सिद्धसाधनता।

विमतं सद्विलक्षणम्। असद्विलक्षणञ्चेति प्रतिज्ञार्थः स्यात् तत्रासद्विलक्षणत्वं प्रपञ्चस्यास्माभिरङ्गीकृतमेव। इति सिद्धसाधनता भविष्यति। सतोऽपिघटादेः सदन्तरपटादि वैलक्षण्याङ्गीकारात् सिद्धसाधनतैव। इत्याद्यनेकविकल्पानां खण्डितत्वात्। मिथ्यात्वानुमानखण्डनाख्ये ग्रन्थे श्री जयतीर्थपूज्यचरणकृत तट्टीकायां च जगतः मिथ्यात्वं न सिध्यति। किञ्च प्रत्यक्षादि बहुप्रमाण विरोधश्च।

छान्दोग्ये षष्ठाध्याये सर्वं खल्विदं ब्रह्मेति सर्वस्य प्रपञ्चस्य ब्रह्मात्मकत्वमुक्त्वा ब्रह्मोपादानकत्वं शुक्तिकायाः रज-

तोपादानत्वमिव प्रपञ्चयितुं सृष्टिमुक्त्वा एकविज्ञानेनेत्यादिना एकस्य ब्रह्मणः ज्ञानेन सर्वस्य ज्ञानं भवतीत्युक्तमिति तन्न । वि त-नि Pages 197-214 Bangalore Edition)

भगवद्वशत्वज्ञानार्थञ्च सदेव सोम्येदमग्र आसीत् इत्यादि सृष्टिकथनं निमित्तकारणत्वाभिप्रायेणैव । एकविज्ञानेन सर्व-विज्ञानञ्च प्राधान्यात्, किञ्चित्सादृश्यात्, कारणत्वञ्च न तु तद-न्यस्य मिथ्यात्वात् । न हि सत्यज्ञानेन (अधिष्ठान भूत ब्रह्म-ज्ञानेन) मिथ्याज्ञानम् (आरोपित सर्वज्ञानं) भवति । नहि शुक्तिज्ञः रजतज्ञः इत्युच्यते । रक्षतज्ञश्चेत् न शुक्तिज्ञः ।' प्रधान ज्ञानात् अप्रधानस्य ज्ञातवत् व्यपदेशः अस्त्येव । यथा प्रधान-पुरुषाणां ज्ञानाह्वाननाशनैः ग्रामो ज्ञातः - आहूतः नाशितः इति व्यपदेशः ।

सादृश्याच्चैकस्त्रीज्ञानादन्यस्त्रीज्ञानमिति । तदेव सादृश्यं अत्रापि विवक्षितम् । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् इत्यादिना । अन्यथैकशब्दः पिण्डशब्दश्च व्यर्थः स्यात् 'मृदा विज्ञातया' इत्येतावता पूर्णत्वात् । न हि एक मृत्पिण्डात्मकानि अन्यमृन्मयानि सादृश्यमेव हि तेषाम् ।

कारणे च पितरि ज्ञाते पुत्रो ज्ञात इति । जानाम्येनमस्य पुत्रोऽयमिति व्यपदेश इति ॥

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यत्र च वाचा वागिन्द्रियेण । नाम्ना संस्कृतातिरिक्तानां, यत् आरंभणं उच्चारणं तद्विकारः उत्पादनम् । न तु संस्कृतस्यैव व्यञ्जनम्

अतस्तानिविकृतानि अतः अनित्यानि च । मृत्तिकेत्येव-संस्कृत मेव नामधेयं अविकृतं नित्यञ्चेत्यर्थलभ्यम् । यथा अविकृत-त्वात् नित्यत्वाच्च संस्कृतं प्रधानम्, विकृतत्वात् साङ्केतिकं (मण्णुमाती इत्यादिकन्नड महाराष्ट्रभाषायाम् ।) अप्रधानम् । तज्ज्ञानात् यत्फलं तत्संस्कृतज्ञानात् सम्पद्यते । तथा जगज्ज्ञा-नफलं परमात्मज्ञानेन लभ्यत इति दृष्टान्तदार्ष्टान्तिकभावः ॥ अत्रमिथ्यात्ववाचिशब्दाभावात् । न च वाचारंभणशब्दः अपि मिथ्यात्वे प्रसिद्धः । वाचारम्भणमात्रं इति चाश्रुतकल्पनम् । तस्मिन् पक्षे नामधेयशब्दः इति शब्दश्च व्यर्थः स्यात् । अतो न कुत्रापि सृष्टिवाक्ये वा एक विज्ञानवाक्ये वा दृष्टान्तवाक्ये वाचा-रंभणवाक्येऽपि जगतः मिथ्यात्वमुच्यते । अपि तु श्रुत्यादिवाक्य-समुदायात् सत्यत्वं च गम्यते ।

१. कविर्मनीषी परिभूः स्वयंभूः याथातथ्यतोऽर्थान् व्यदधाच्छा-श्वतीभ्यः समाभ्यः ॥ (ईशावास्य)

२. यच्चिकेत सत्यमित्तन्नमोघं वसुस्पार्हं उत जेता उतदाता ।

३. विश्वंसत्यं मघवाना युवोरिदापश्च न प्रमिनन्ति व्रतं वां प्रधान्वस्य महतो महानि सत्यासत्यस्य करणानि वोचम्(ऋ)

४. अनाद्यनन्तं जगदेतत् ईदृक्प्रवर्तते नात्र विचार्यमास्ति । न चान्यथा क्वापि च कस्य चेदं अभूत्पुरा नापि तथा भविष्यत् ।

५. असत्यमाहुः जगदेतत् अज्ञाः शक्तिहरेः ये न विदुः परां हि । (सत्यसृष्टौ अशक्ता हि मिथ्या सृष्टिं प्रकुर्वते)

यः सत्यरूपं जगदेतत् ईदृक् सृष्ट्वात्वभूत् सत्यकर्मा महात्मा।

ननु मायामये वासनया शयानः इत्यादौ मिथ्यात्वमुच्यते इत्याशंकां आगमवाक्येन परिहरति ।

प्रज्ञाविनिर्मितं यस्मात् अतो मायामयं जगत् ।
अने[1]नानु[2]गतं यस्मा दनृतं तेन कथ्यते ॥
बोधानिवर्त्यमपि तु नित्यमेव प्रवाहतः ।
अ इत्युक्तः परोदेवः तेन सत्यमिदं जगत् ।
तदधीन स्वरूपत्वात् असत्यं तेन कथ्यते ।
सत्य[3]स्य सत्य[4] स विभुः इन्द्रचापस्य मूर्यवदिति च ।
तस्योपनिषत्[5] सत्यस्य सत्यमिति । प्राणा वै सत्यं तेषामेष सत्यमिति च ॥

भागवत १०-२-२६

सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्य ।
सत्यस्य सत्यं ऋतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥

ननु - अनादि माययासुप्तो यदा जीवः प्रबुध्यते । इत्येकस्यैव जीवस्य प्रपञ्चकल्पनाश्रयतया प्रतीयमानत्वात्

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।

मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः ॥ इति श्रुतिः मानं इति चेन्न । अत्र प्रपञ्चशब्दः न जगत्परः । किन्तुपञ्चभेदपरः इत्युत्तरभेदप्रस्तावे व्याक्रियते ॥

---

1. चेष्टकेन 2. व्याप्तं 3. सत्यतायाः 4. नियामकः
5. रहस्यं नाम ।

किञ्च, नहिसत्यशुक्तेः सत्यरजतस्य, तयोः सादृश्यस्य च अभावे भ्रान्तिः भवति ।

अधिष्ठानं च सदृशं तथ्यवस्तुद्वयं विना ।
नभ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि ॥

एकस्य जगतः मिथ्यात्वं वदता पिण्याकयाचनार्थं गतस्य पिशाचस्य खारीतैलदानप्रतिज्ञावत् सत्यवस्तुद्वयं अङ्गीकार्यंभवति ॥

न भ्रान्तिकल्पितं विश्वं अतो विष्णुवलाश्रयम् ॥
इति ब्रह्मवैवर्ते ।

न च मायाविना माया दृश्यते विश्वमीश्वरः ।
सदा पश्यति तेनेदं न मायेत्यवधार्यताम् ॥ इति च ।
अपरोक्षदृशा मिथ्यादर्शनं न क्वचिद्भवेत् ।
सर्वापरोक्षवित् विष्णुः विश्वदृक् तन्न तन्मृषा ॥ इतिच ।

नेदं मायामयं मायावित्वाभिमतेन दृश्यमानत्वात् । अधिष्ठानं आपरोक्ष्येण पश्यतः तत्रारोपितार्थदर्शनं न भवेत् । अधिष्ठानापरोक्षज्ञानवता दृश्यमानं तत्रारोपितं न भवेत् इति यावत्
गीता ९-१०

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगत् विपरिवर्तते ॥

गीता-१४-३ ममयोनिः महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥

संभवः सर्वभूतानां ततो भवति भारत ।
इति प्रकृतिकार्यत्वं गीतोक्तमनुसंस्मर ॥
निमित्तं कालकर्मादि कर्ता नारायणः प्रभुः

उपादानं सैवैका प्रकृतिः त्रिगुणात्मिका ॥
इति श्रुति पुराणाद्यैः जगतः सृष्टिरीर्यते ।
ब्रह्मज्ञाननिवर्त्यत्वमेषा न श्रूयते क्वचित् ॥
अनाद्यनन्तकालेषु नैवास्योपरमः किल ।
अनन्तत्वादबाध्यं च जगत् ब्रह्मवदेव हि ॥
एकं स्वरूपतो नित्यं अन्यन्नित्यं प्रवाहतः ॥

माण्डूक्ये - स्वप्नमायास्वरूपेति सृष्टिरन्यैः विकल्पिता ।
इच्छामात्रं प्रभोः सृष्टिः इति सृष्टौ विनश्चिताः ॥ इति ।
यथा सत्या हरेरिच्छा तथासृष्टिश्च सा सती ॥
सृष्टौ निश्चयवन्तो हि पक्षमेनं वदन्ति ते ।
सन्दिग्धमनसस्त्वन्यान् पक्षान् आचक्षते किल ॥
भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावोऽयं आप्तकामस्य का स्पृहा ॥
यतः स्वभावतैवोक्ता कर्तृत्वादेः परात्मनि ।
स्वभावस्यानपायादि युक्त्या तन्नित्यतोदिता ॥

यदपि सर्वं खल्विदं ब्रह्मेति सर्वस्य प्रपञ्चस्य ब्रह्मात्मकत्वं तत् आधाराधेयभावेनैव, न तु तादात्म्येन । सर्वमात्मनि यस्येति सर्वात्मा ।

अद्भुतानीह यावन्ति भूमौ वियति वा जले ।
त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ।
इत्यक्रूरवचः पश्य विश्वरूपं च तं स्मर ।
शिशोर्यस्य किलास्येप्राक् अपश्यत् विश्वं अम्बिका ।
युक्तीः पश्य श्रुतीः पश्य मिथ्यादृष्टिं परित्यज ॥

[युक्तिमल्लिका]

किं बहुना—

सत्यार्थ एवसन्मान्यः मिथ्यार्थो न महत्प्रियः ।
किं रज्जुसर्पालंङ्कारः शुक्तिरूप्याचलेऽथिवः ॥

इत्थं सत्यआत्मा, सत्यो जीवः, सत्यं भिदा, इति स्वस्य, स्वजगतश्चैव स्थापनात् । परितुष्यता हरिणा श्रीमध्वस्य, 'सत्यलोकाधिपत्ये च दत्ते ब्रह्मापि सोऽभवत् । वायुर्हिब्रह्मतामेति' । वायोः अवतारत्रयं हनुमद्भीममध्वेति । तत्र हनूमतः भाविब्रह्मता वाल्मीकिरामायणेऽपि उत्तरकाण्डे ३६-४५

सोऽयं नवव्याकरणार्थवेत्ताब्रह्मा भविष्यति अपि ते प्रसादात् ॥ इति ।

## ३. तत्त्वतो भेदः ॥

भेदेऽप्यभेदेऽपि बहूनि सन्ति वाक्यानि नूनं निगमे पुराणे ।
मात्सर्यमुत्सार्य विचार्य तथ्यं पथ्यं स्वकीयं प्रवदन्तु धीराः ॥
ॐ पृथगुपदेशात् ॐ सूत्र २-३-२८

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभि चाकशीति ॥
(श्वेताश्व ४-६)

नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां योविदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां शान्तिः शाश्वती नेनरेषाम् ॥ (कठ-५-१३) इत्यादिषु भेदः प्रतीयते । तत्त्वमसि (छा-६-८-७) अहं ब्रह्मास्मि (बृह-३-४-१०) कर्माणि

विज्ञानमयश्च आत्मा परेऽव्यये एकीभवन्ति (मु-३-२-७) इत्यादिषु अभेदः। अद्वैतश्रुतेः षड्विधतात्पर्यलिङ्गयुक्ताया बलवत्त्वात्। एकमेवाद्वितीयम् इत्युपक्रमात्। तत्त्वमसीत्युपसंहारात्। तत्त्वमसीति नवकृत्वः अभ्यासात्। अद्वैतस्य प्रमाणान्तरेणाप्राप्तत्वेनापूर्वत्वात्। तस्य तावदेव चिरं इति फलश्रवणात् येनाश्रुतं श्रुतं भवति इत्याद्यर्थवादात्। मृत्पिण्डादिदृष्टान्तेनोपपादनात् (उपपत्तेः) तद्विरुद्धभेदश्रुतेः अतत्त्वावेदकत्वमेव इति चेत् ॐ पृथगुपदेशात् ॐ जीवः परमात्मना पृथक्भिन्नः। कुतः? उपदेशात्। भिन्नोऽचिन्त्यः परमो जीवसंघात् पूर्णः परः जीवसंघो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत् इति॥ सोपपत्तिक काशिकश्रुतेः भिन्नएव जीवः। विरुद्धधर्माधिकरणत्वयुक्तियुक्तत्वेन भेदः श्रुतेः प्राबल्यात् इति भावः। नन्वेवं सति अद्वैतश्रुतेः निर्विषयतया अप्रामाण्यं प्राप्तं इत्याशङ्कां परिहरति ॐ तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत् ॐ (२-३-२९)। न, अभेदश्रुतेः अप्रामाण्यप्राप्तिः। परमात्मगुणसदृशानन्दादिगुणस्वरूपत्वेन जीवस्य गौणवृत्त्या अभेदव्यपदेशोपपत्तेः। यथा खलु सकलजगद्गुणसदृशः सर्वं खल्विदं ब्रह्म छा३-१४-१ इत्यादौ। तथा अत्रैव स्मृतिसंमतिमाह। भविष्यत्पुराणे च—

> भिन्ना जीवाः परो भिन्नः तथापि ज्ञानरूपतः।
> प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः॥ इति च।

गौणीवृत्तिरमुख्या इति चेत्। सत्यम्। मुख्यार्थसंभवात् आश्रीयते। न हि सार्वज्ञादिगुणवता अल्पज्ञानादिमतः जीवस्याभेदो युक्तः।

"अग्निं माणवकं वदन्ति क्वयः पूर्णेन्दुबिंबं मुखं
नीलेन्दीवरमीक्षणं कुचतटीं मेरुं करं पल्लवम् ।
आहार्यं भ्रमतो भवेत्पुनरियं भेदेप्यभेदा मतिः
कर्तव्या मतिरीदृशी खलु तथा ब्रह्माहमस्मि श्रुतेः" ॥

न सार्वज्ञादिगुणाः पारमर्थिकाः इति चेन्न । यस्सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । इत्यादिश्रुतिसिद्धत्वात् । श्रुतिसिद्ध-सार्वज्ञादेरपि मिथ्यात्वे बौद्धराद्धान्तापत्तिः । किञ्चाद्वैतश्रुति-सिद्धार्थेपि विश्वासः कथम्? धर्मिग्राहकोपजीव्यप्रमाणविरु-द्धश्चाद्वैतबोधनम् । जीवपरमात्मविषयैः प्रमाणैः भेदस्यैव ग्रहणात् । परेणापि हि प्रमाणविरोधभिया लाक्षणिकोऽर्थोऽ-ङ्गीकृतः । अद्वैतश्रुतेः । तथा च सुतरांयुक्तं गौणार्थग्रहणम् । लक्षणावृत्तौ हि तत्वंपदवाच्यार्थपरित्यागेन असिपदमात्रे मुख्या-र्थता अशेषप्रमाणविरुद्धा अंगीकर्तव्या ततो वरं तत्त्वंपद-मुख्यार्थमङ्गीकृत्यासिपदमात्रस्य गौणार्थवर्णनम् ॥ षड्विध-तात्पर्यलिङ्गैः अयमेव श्रुतेरभिप्राय इति चेत् । न हि तात्पर्य-लिङ्गानि लाक्षणिकार्थग्रहणे कारणानि । लिङ्गबलादद्वैते एव तात्पर्ये सिद्धे प्रमाणविरोधात् गौणार्थमनङ्गीकृत्य लक्षणा आ-श्रीयते इति चेन्न । उपक्रमादीनां भेदे तात्पर्यात् । न्यायामृते द्वितीयपरिच्छेदे २५ प्रकरणं (पुट ५८९. (T.R.K. Edition)

सन्ति च भेदश्रुतेरपि षड्विधतात्पर्यलिङ्गानि । तथाहि-आथर्वणे । द्वा सुपर्णा इत्युपक्रमः । परमंसाम्य[1]मुपैति इत्युप-

---

1. साम्यस्य भेदरूपत्वमेव । तद्भिन्नत्वविशेषितमेव तन्निष्ठबहुधर्मयोगित्वम् तत्सादृश्यम् । न तु तद्भिन्नत्वं विहाय तन्निष्ठबहुधर्मयोगित्वमात्रम् ।

संहारः तयोरन्वयः। अनश्नन्नन्यः। अन्यं ईशं इत्यभ्यासः। शास्त्रैकगम्येश्वरप्रतियोगिकस्य तद्धर्मिकस्य वा कालत्रयाबाध्य भेदस्य शास्त्रं विना अप्राप्ते अपूर्वता। पुण्यपापे विधूय इति फलम्। अस्य महिमानं इति श्रुतिरूपोऽर्थवादः। अत्ति अनश्नन् इत्युपपत्तिः।

एवं बृहदारण्यके (४-७-३) वेत्थ नु त्वं काप्यन्तर्यामिणं इत्युपक्रमः। एषत आत्मा अन्तर्यामी इत्युपसंहारः। एषत आत्मा अन्तर्याम्यमृतः इत्येकविंशतिकृत्वः अभ्यासः। अन्तर्यामित्वस्य अप्राप्तत्वात् अपूर्वता। सब्रह्मवित् इत्यादि फलम् तच्चेत्त्वं याज्ञवल्क्यसूत्रमविद्वान् तच्चान्तर्यामिणं ब्रह्म गवीरुदजसे मूर्धा ते विपतिष्यति इति निन्दारूपोऽर्थवादः। यस्य पृथिवी न शरीरं यं पृथिवी न वेद इत्याद्युपपत्तिः॥

इयञ्च श्रुतिः भेदपरैवेति सूत्रकृता उक्तम्। ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ १-२-२० इति सूत्रं भेदपरमिति अद्वैतिनापि भाषितत्वात्।

एतादृशो भेदः पञ्चविधः[1]। तथाहि - जीवजडेश्वरात्मकोऽहि अयं प्रपञ्चः जीवाः देवर्षि पितृनरादिरूपेण बहवः अनादिनित्याः स्वरूपतः। जडानि कालवेद अव्याकृताकाश प्रकृति रूपेण बहूनि अनादिनित्यानि। ईश्वरस्तु एकः अनादिनित्यः। एतेषां मध्ये जीवजडभेदः, जीवेश्वरभेदः, जीवानां परस्परं

---

1. प्रकृष्टः पञ्चविधोभेदः प्रपञ्चः। पचिविस्तारे। विस्तृतः मोक्षेऽपिव्याप्तः पञ्चभेदः।

भेदः, जडानां परस्परं भेदः, जडेश्वर भेदः ॥ भेदो हि अन्यो-न्याभाव एव । स च धर्मिस्वरूपमेव । एवमनादिनित्यवस्तुद्वयसंबन्धिभेदोऽपि अनादिनित्यः ।

पञ्चभेदास्त्विमे नित्याः सर्वावस्थासु सर्वदा ।
पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ॥
निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्न चान्यथा ॥

अयमेव पञ्चविधो भेदः ।

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं सर्वं अद्वैतं न परमार्थतः ॥
इति श्रुति प्रतिपाद्यः ।

युक्तिपल्लिका—

इयंश्रुतिः पञ्चभेदः नित्यतासत्यते स्फुटम् ।
सयुक्तिकं साधयितुं प्रावर्तत किल क्रमात् ॥
तत्पञ्चानां समूहोपि पञ्चोऽभूत् अनु[1]शासनात् ।
उपसर्गोऽपवर्गार्थे ज्ञानत्वात् विशिनष्टि तम् ॥
अतः पञ्चविधो भेद. प्रपञ्चोऽभूत् विचारणे ॥

यदि विद्येत तर्हि बाध्येत इत्यर्थाश्रयणे-

ब्रह्मैवोन्मूलयेत् यस्मात् तर्कोऽयं अतिकर्कशः ।
अतस्सर्वैश्च धात्वर्थः वाच्योऽन्यत्र मयैव न ॥
उत्पत्तिनाशौ यद्व्याप्तौ निवृत्तिश्च विनाशनम् ॥

---

1. पंचदृशतौ वर्गेवा ।

तस्मात् उत्पत्तिरत्रार्थो यद्धात्वर्थो[1]ऽप्यनेकधा ।
भेदवर्गः प्रपञ्चाख्यः यद्युत्पद्येत तर्ह्यसौ ॥
विनश्येत् न च नाशोऽस्ति तस्मान्नोत्पद्यते च सः ।
इति तन्नित्यतामाह श्रुतिर्नास्त्यत्र संशयः ॥
इत्यर्धेनित्यतामुक्त्वा वक्त्यर्धे सत्यता च सा ।
मायालेशो[2]ज्झितं वस्तु मायामात्रं ततोऽभवत् ॥
एवं साद्वैतसत्यत्वं साधयित्वा सहेतुककम् ।
अद्वैतः सर्वभावानां इत्याद्युक्तिं स्वरोधिनीम् ।
अर्थान्तरे नेतुकामा पुनराह श्रुतिः किल ॥
यदद्वैतं तत्रतत्र श्रूयते स्मर्यतेऽपिवा ।
सर्वोत्तमत्वात् परमं अर्थं हरिमपेक्ष्य तत् ॥ (परमार्थतः)
यतः ल्यब्लोपतः प्राप्ता पञ्चम्यस्तिस्थले स्थले ।
अतः सार्थान्तरं ब्रूयात् इत्युक्त्वा विरराम च ॥

वि-त-नि (प्र-प्ररिच्छेदः)

मायेति भगवत्प्रज्ञा सैवमानत्राणकर्त्रीयस्यतन्मायामात्रम् । परमेश्वरेण ज्ञातत्वात् रक्षितत्वाच्च न द्वैतं भ्रान्तिकल्पितं इत्यर्थः न हीश्वरस्य भ्रान्तिः । तर्हि अद्वैतः सर्वभावानां इति व्यपदेशः कथं इत्यत्र आह । अद्वैतः सर्वभावानां इति । सर्वस्मात् उत्तमोऽर्थः स एक एव । परमार्थापेक्षया हि अद्वैतं

---

1. विदसत्तायां - उत्पत्तिसत्तायोगः एव । विद्लृलाभे - विद्येत लभ्येत, उत्पद्येत । उत्पत्तिः स्वात्मनः लाभः ।

2. कुलिशक्षतानां अवेदनाज्ञं इतिवत् मायायाः अमात्रम् मायारहितम् ।

इत्यर्थः । सर्वभावानां मध्ये तस्यैकस्यैवाद्वैतत्वं समाधिकराहित्यमेवोक्तं स्यात् । अन्येषां सर्वभावानां समाधिकभावः ।

> द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम् ।
> मतं हि ज्ञानिनामेतत् मितं त्रातं च विष्णुना ॥
> तस्मात्सत्यमिति प्रोक्तं परमो हरिरेव तु ॥
>
> इति परमश्रुतिः ।

न चासत्यो भेदः । सत्यमेनमनुविश्वेमदन्ति रातिं देवस्य गृणतो मघोनः । सत्यः सोऽस्य महिमा गृणे शिवो यज्ञेषु विप्रराज्ये । सत्य आत्मा । सत्यो जीवः । सत्यंभिदा सत्यंभिदा सत्यंभिदा मैवारुवण्यो मैवारुवण्यो मैवा[1]रुवण्यः ।

आत्मा हि परःस्वतन्त्रः सर्ववित्, सर्वशक्तिः, परमसुखः, परमो जीवस्तु तद्वशः अल्पज्ञः अल्पशक्तिः आर्तः अल्पकः इत्यादिश्रुतिभ्यः ।

नचावान्तरसत्यत्वमिदम्—

व्यवहाराभिदा अपि गुरोर्जगतां न तु चित्तगता स हि चोद्य परम् ॥ (द्वा. स्तो)

यो वेदनिहितं गुहायां परमे व्योमन् । सोश्नुते सर्वान् कामान् सहब्रह्मणा विपश्चिता ॥

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।

---

1. आरुभिः दोषिभिः वन्यः वननीयः भजनीयः मैव । तदुक्तप्रकारः न भवति परमात्मा इति ।

ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः । परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । स तत्रपर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा अज्ञातिभिर्वा इत्यादिना मोक्षेपि भेदः

ॐ जगद्व्यापारवर्जम् ॐ ४-४-१७ ॐ प्रकरणादसंनिहितत्वाच्च ॐ ४-४-१८ किञ्च न कुत्राप्यैक्यम् ।

दुग्धे तोयं मिलितमपरे नैव पश्यन्ति भेदं
हंसस्तावत्सपदि कुरुते क्षीरनीरस्य भेदम् ।
एवं जीवाः भगवति परे ब्रह्मणि श्लेषमाप्ताः
भक्ताः भेदं विदधति तयोः ज्ञानमासाद्य सम्यक् ॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । (कठ) ।

स्वोक्त तादृक्त्व दार्ढ्यार्थं एवेत्यैक्यं व्यवच्छिनत् ॥ न्यायामृते २-२८ माषराशौ प्रक्षिप्तमाषतदवयवानामिवक्षीरे प्रक्षिप्तनीरतदवयवानामिव च अन्योन्यं मिश्रीभावेपि प्राग्भिन्नानां पश्चादपि ऐक्यायोगात् ।

ता एवापो ददौ तस्य स मुनिः संशितव्रतः । इतिकौर्मे । याः इन्द्रकमण्डलुस्था आपः स्वकमण्डलौ निक्षिप्ताः ता एववसिष्ठः दत्तवान् इत्युक्तेश्च ।

कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वं एकीभवन्ति । (मु. ३. २. २७) अत्रैक्यं विवक्षितं चेत् परेणैकीभवन्ति इति तृतीया स्यात् । न तु परे अव्यये इति सप्तमी आधार वाचिकी ।

एकीभवन्ति इति च्विप्रत्ययः अभूततद्भावं वक्ति । संसारे अपि जीवब्रह्माभेदं वदतामद्वैतिनां न साधकः । संसारे अभूतवैकुण्ठ-लोकस्थमुकुन्दपदप्राप्तिरिति वदतां द्वैतिनां साधकः ।

परेणैकीभवन्तीति प्रयोगश्च भवेत्किल ।

अत्रैकीभावः एकीभूता तु सा सेना पाण्डवानभ्यवर्तत इत्यत्रेव मत्यैक्यं वा, सायं गावः गोष्ठे एकीभवन्ति इत्यत्रेवस्थानैक्यं वा अर्थः । न तु स्वरूपैक्यम् । मत्यैक्ये प्रमाणानि । (वि. त. नि)

कामेन मे काम आगात् हृदयाद्धृदयं मृत्योः ।
यदमीषामदः प्रियं तदै तु उप ममाभि ॥ इति स्मृतिः ।

स्वरूपैक्याभिप्राये कर्माणि विज्ञानमयश्चेति न युज्यते । न हि-तत्पक्षेपि कर्मणां ब्रह्मैक्यं मुक्तावस्ति । गताः कलाः पञ्चदश-प्रतिष्ठाः देवाश्चसर्वे प्रतिदेवतासु इत्यन्यासां कलानां गमनमुक्त्वा कर्मणां विज्ञानात्मनश्च एकीभावकथनं व्यर्थं स्यात् । विशेषा भावात् । परेऽव्यये इत्यधिकरणत्वकथनञ्च भेदज्ञापकम् । अन्य-था पर एव भवन्तीति निर्देशः स्यात् ।

जीवस्य परमैक्यं तु बुद्धिसारूप्यमेव तु ।
एकस्थाननिवासो वा व्यक्तिस्थानमपेक्ष्य सः ॥

न स्वरूपैकता तस्य मुक्तस्यापि विरूपतः ।

स्वातन्त्र्यपूर्णतेऽल्पत्व पारतन्त्र्ये विरूपिते ॥ इतिपरमश्रुतिः ।
इतिहासपुराणाभ्यां भेदश्रुतेः उपबृंहणम् । पौण्ड्रकवासुदेव-चरितम् । गीतायां १६-१४ (युक्तिमल्लिका)

ईश्वरोऽहं अहं भोगी सिद्धोऽहं बलवान् सुखी ।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥
इत्यारभ्योदितं सर्वं मतमेतद्धि रक्षसाम् ।
वासुदेवोऽहमित्यज्ञः दूतं कृष्णाय प्राहिणोत् ॥

भागवते १०-६६-१ to २३ श्लो-

त्वं वासुदेवो भगवान् अवतीर्णः जगत्पतिः ।
इति प्रस्तोभितो बालैः मेन आत्मानमीश्वरम् ॥
एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः ।

भा. ७-८-१३ यस्त्वया मंदभाग्योक्तः मदन्यः जगदीश्वरः ॥
(हिरण्यकशिपुः)

इति । स्वान्येश्वरनिषेधेन स्वस्यैवेश्वरता हृदि ॥
हिरण्यकशिपोश्चेति स्पष्टं तत्र प्रतीयते ।
अत्राधिकारिणः सर्वे श्रूयन्ते क्रूरराक्षसाः ॥
अतो जीवेशभेदोऽयं बुधैर्मान्यः मुमुक्षुभिः ॥

तत्त्वमसि. अहं ब्रह्मास्मि, ब्रह्म वेद ब्रह्मैव भवति इत्यादीनां अतिसुन्दरविचारः अस्ति । विस्तरभिया न विवृतः । जीवगणाः हरेरनुचराः इति चतुर्थरत्नं परीक्षामहे ॥

## ४. जीवगणाः हरेनुचराः ॥

अज्ञानदुःखजन्मभयमोहादियुक्तत्वं जीवस्य लक्षणम् । ईशलक्ष्मीव्यतिरिक्ता. सर्वे ब्रह्मादयः जीवाः । 'क्षरः सर्वाणि भूतानि' इति गीता (१५-१६) वचनात् । १-१-७ भाष्ये मध्वाचार्यैः उदाहृतवचनाच्च ।

चेतनस्तु द्विधा प्रोक्तः जीवः आत्मेति च प्रभो ।
जीवाः ब्रह्मादयः प्रोक्ताः आत्मैकस्तु जनार्दनः ॥ इति ।
यो गुणैः सर्वतो हीनः यश्चदोषविवर्जितः । (सत्वादिभिः)
हेयोपादेयरहितः स आत्मेत्यभिधीयते ॥

एदन्यस्वभावोयः सोनाऽत्मेति सतां मतम् ॥
अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते ॥ इति वामने ।

ननु ॐ इयदामननात् ॐ ३-३-३५ इति सूत्रे प्राणो वा सर्वेभ्यो भूयान् । न हि प्राणाद्भूयान् इति श्रुतेः जीवोत्तमस्य वायोः, वायुर्हि ब्रह्मतामेति इति ब्रह्मगश्च कथमज्ञानादि ? प्राणस्थनासुरावेशः आखणाश्मसमो हि सः ॥ इति ऐतरेयभाष्येऽपि उक्तत्वात् । भागवततात्पर्ये एकादेशे श्रीमध्वाचार्यैरुदाहृतम् ।

देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ।
तेषां दुःखादिकं किञ्चित् असुरावेशतो भवेत् ॥

इतीतरदेवानां असुरावेशोक्तेः इति चेत् । उच्यते । भागवतादिषु अज्ञानभयादेः उक्तत्वात् । षष्ठस्कन्धभागवततात्पर्ये श्री मध्वाचार्यैरुदाहृतम्—

अज्ञानं च चतुर्वारं द्विवारं भयमेव च ।
शोकोऽपितावनान्यत्र कदाचिद्ब्रह्मणो भवेत् ॥
यत्र वायूदपद्मादि रूपेण प्रकृतिः स्थितः ।
एकस्तत्राबिभेद्ब्रह्मा विचार्य भयमत्यगात् ॥ इति ।

मुह्यन्ति यं सूरय इति भागवताद्यपद्ये । ११ स्कन्धे भागवते अ-७-श्लो-१७ श्री व्यासेनोक्तम्— 'सर्वे विमोहिताधियः तव माययेमे ब्रह्मादयस्तनुभृतः बहिरर्थभावाः ॥' इति मोहोक्तेः । अत्र मोहः नियतापरोक्षज्ञानाभावः एव, नतु मिथ्याज्ञानमिति ज्ञातव्यम् ।

नित्यादुःखा रमान्ये तु स्पृष्टदुःखाः समस्तशः ।

इति तत्त्वसंख्याने श्रीमध्वाचार्यैरुक्तम् । किन्त्वज्ञानादीनां रुद्रादिषु यथास्थिरं न तथा ब्रह्मणि इति स्थैर्याभावप्रतिपादकत्वम् । अतो न विरोधः ।

संसारित्वं वा जीवस्य लक्षणम् । 'भूतबन्धस्तु संसार-मुक्तिस्तेभ्यो विमोचनम्' । इत्युक्तेः । अथवा प्रकृतिबन्ध एव संसारः । लिङ्गदेहश्च ब्रह्मादिसर्वजीवसाधारणः ॥

जीवा असंख्याकाः ॥ वि-त-नि Bangalore Edition ३०२ पुटे श्रीमध्वाचार्यैरुदाहृतम् ।

अनागता अतीताश्च यावन्तः सहिताः क्षणाः ।
अतीतानागताश्चैव यावन्तः परमाणवः ॥
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक् ।
परमाणुप्रदेशेऽपि ह्यनन्ताः प्राणिराशयः ॥ इति वत्सश्रुतेः ।

पार्थिवादीनां सप्रतिघत्वं नियतम् । तत्कथमल्पदेशावस्थानम् ? स्वरूपापेक्षया सूक्ष्मत्वात् ।

सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिताः ।
सहस्रयोजनसभां प्रभावात् विश्वकर्मणः ॥
अनन्ता राशयोऽनन्ताः प्रजानामधिसंस्थिताः ।

इति स्कान्दे ।

न केवलं सर्वेपि मिलित्वानन्ताः । किन्तु गणशोऽपि त्रिविधाः ॥ गीता १७-२-३ श्लोकेषु भगवतोक्तम् । [अत एव जीवगणा- इत्युक्तम् । ]

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्विकी राजसी चैव तामसी चेति तां शृणु ॥
सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धः स एव सः ॥

गीता १४-१८ ऊर्ध्वं गच्छन्ति सत्वस्थाः मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्थाः अधो गच्छन्ति तामसाः ॥

इति गतित्रययुक्तम् ॥ महाभारततात्पर्यनिर्णये अ-१. श्लो. ८६ श्रीमध्वाचार्यैरुक्तम् ।

त्रिविधा जीवसंघास्तु देवमानुषदानवाः ।
तत्र देवा मुक्तियोग्याः मानुषेषूत्तमास्तथा ॥
मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ।
(नित्यसंसारिण )
अधमा निरयायैव दानवास्तु तमोलयाः ॥
मुक्तिर्नित्या तमश्चैव नावृत्तिः पुनरेतयोः ।
देवानां निरयो नास्ति तमश्चापि कथञ्चन ॥

असुराणां तथामुक्तिः कदाचित्केनचित्क्वचित् ।
मानुषाणां मध्यमानां न चैतत् द्वयमाप्यते ।।

निरयः निर्गतमयनं उद्गमनं यस्मादिति व्युत्पत्त्या तम इत्यर्थः । ॐ अपि सप्त ॐ ३-१-१६ "तामिस्रश्चान्धतामिस्र द्वौ नित्यौ सम्प्रकीर्तितौ । तत्र मनुष्या अधमाः तेभ्योपि अधमाः दानवाश्च पतन्ति । अधमाधमाः कल्याद्यास्तु अन्धतामिस्रेपतन्ति इत्याह अधमा इति । वायुस्तुतौ त्रिविक्रमपण्डितैः उक्तम् ।

तामिस्रान्धादिकाख्ये तमसिसुबहुलं दुःखयस्यान्यथाज्ञानान् ।
विष्णोराज्ञाभिरित्थं श्रुतिशतमितिहासादि चाकर्णयामः ॥

इति । श्रीमध्वाचार्यैः ३-१-१४ भाष्ये उदाहृतम्— सर्वे वा एतेऽशुभकृतः संयमने(अनित्यनरके)प्रपतन्ति । तत्र ये परद्विषः गुरुद्विषः श्रुतिद्विषः तदवमन्तारः शठाः मूर्खा इति । ते वै ततोऽवरुह्य तमसि प्रपतन्ति । नैवैते उत्तिष्ठन्ते अपि कर्हिचित् वव्रं वा एतत् इत्याहुः । [स्वस्थितान् वारयति गन्तुं न विमुञ्चति इति वव्रम् । सदा आवृणोति इति वा वव्रम्] अथयेऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति, ते वै तदनुभूयेमं लोकं अनुव्रजन्ति ॥ इति कौण्ठरव्य[1]श्रुतेः ॥

गीतायां १६-१९ भगवतोक्तम्—

---

1. एतवादिश्रुतयः इदानीन्तनानां अज्ञातचराः अपि आचार्यसमकालीनैरन्यैरपि उदाहृताः । तदा सर्वैर्विदिताः ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।।..........
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।। इति ।

एवमादिप्रमाणैः सात्विकादित्रिविधजीवस्वरूपाणि अनादिनित्यानि । न तेषामन्यथाभावः कदापि । कर्तुमकर्तुमन्यथाकर्तुं शक्तोपि भगवान् तत्तत्स्वरूपयोग्यता, अनादिकर्मजीवप्रयत्न इति त्रयमनुसृत्यैव फलं ददातीति स्वसंकल्पानुसारेण नियमयन् "सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यति ।।" तन्निमित्तं वैषम्यनैर्घृण्यादि च नेति २-१-३६ सूत्रे सम्यक् समर्थितं श्रीव्यासेन ।

३३ to ४० भाष्ये उभयलिङ्गाधिकरणे श्रीमध्वाचार्यैरुदाहृतम् ।

सर्वप्रकारेणोत्साहेपि ये ज्ञानयोग्याः त एव ज्ञानं प्राप्नुवन्ति । नान्ये । .... छा ८-७-३ इत्याचाचार्योपदेशसाम्येपि विरोचनः विपरीतज्ञानमाप । इन्द्रः सम्यग्ज्ञानं इत्युभयविधलिङ्गात् ॥

दैवीमेव सम्पत्तिं देवा अभिगच्छन्ति । आसुरीमेव– चासुराः । नैवैतयोः अभिभवः कदाचित् । स्वभाव एव ह्यवतिष्ठते इति स्वभावानभिभवश्च दर्शयति ।

आसुरा असुरेणैव स्वभावेन च कर्मणा ।
ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ।।
देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् ।
सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ।।

नानयोरन्यथाभावः कदाचित्क्वापि विद्यते ।

मानुषा मिश्रमतयः विमिश्रगतयोऽपि च ॥ इति स्कांदे ॥
इति श्री मध्वाचार्यैरुदाहृतम् ॥

असुरान् दमयन्विष्णुः स्वपदं च सुरान् नयन् ।
पुनः पुनः मानुषांस्तु सृतावावर्तयत्यसौ ॥

इति भविष्यत्वपर्वणि । असुरजातेरेवासुरत्वं देवजातेरेव देवत्वम् जैमिनेरपि सिद्धमेव । नासुरा दैवीं, न देवा आसुरीं, नमनुष्याः दैवीं आसुरीञ्च गतिं (स्वभावम्) ईयुः आत्मीयामेव गतिमनुभवन्ति इति नियमश्रुतेः । नासुराणां दैवं रूपं न देवानामासुरं, न चोभयं मनुष्याणां, यो यद्रूपः स तद्रूपः निसर्गोह्येष भवति इत्यतद्रूपत्वश्रुतेः । तं भूतिरिति देवाः उपासांचक्रिरे ते बभूवुः । अभूरित्यसुराः । ते ह पराबभूवुः (ऐ. आ-२-१-८)

इति देवासुराणां भावाभावश्रुतेश्च ॥

ननु प्रह्लादादिदैत्यानां सम्यग्ज्ञानतत्फलयोः दर्शनात्कथमेतत् ?

देवाः शापाभिभूतत्वात् प्रह्लादाद्या बभूविरे ।
अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेत् ॥

इति चाध्यात्मे ॥ गीतातात्पर्ये—

देवाः शापबलादेव प्रह्लादित्वमुपागताः ।
अतः पुनश्च देवत्वं ते यान्ति निजमेव तु ।
हेतुतः सोऽन्यथाभावः रक्ततास्फटिके यथा ॥ इति

तत्र मुक्तियोग्याः देवर्षि पितृ प नराः इतिपञ्चधा । तत्त्व-संख्याने मध्वाचार्यैरुक्तम् । ब्रह्मादयः देवाः । नारदाद्या ऋषयः पितरः चिराः । रघु अम्बरीषादयः पाः (पान्तीति) चक्रवर्तिनः मनुष्योत्तमाश्च ॥ नित्यं सुखदुःखमिश्रा नित्यसंसारिणः मध्यम-मनुष्याः । सर्वदा स्वर्गभूनिरयचारिणः । त्रिदिवनिरयभू-गोचरान् नित्यबद्धान् इति वायुस्तुतौ ।

तमोयोग्यास्तु दैत्यरक्षःपिशाचकाः मनुष्याधमाश्चेति । मुक्तियोग्यानां मध्येपि (भारत ता-नि-१-९४) श्रीमध्वाचार्यै-रुक्तम् ।

ब्रह्मत्वयोग्याः ऋजवो नाम देवाः पृथग्गणाः ।
तैरेवाप्यं तत्पदं तु नैवान्यैः साधनैरपि ।
एवं सर्वपदानाञ्च योग्यास्सन्ति पृथग्गणाः ॥ इति ।

जीवाः स्वभावतः स्वरूपेणैव स्त्रीपुंभावयुताः । जात्या-नपुंसक जीवानामभावः । स्वतः पुंसामेव शापादिना पापादिना च नपुंसकत्वम् । अत एवार्जुनस्योर्वशीशापेन षण्ढरूपम् ।

पुंसां स्त्रीत्वं भवेत्क्वापि तथाप्यन्ते पुमान् भवेत् ।
स्त्रीणां नैव हि पुंस्त्वं स्यात् बलवत्कारणैरपि ॥
भारततात्पर्यनिर्णये ११-११३-श्रीमध्वाचार्यैरुक्तम्

गीतातात्पर्ये १-३२-३३-श्रीमध्वाचार्यैरुदाहृतम् ।

यान्ति स्त्रीत्वं पुमांसोपि पापतः कामतोऽपि वा ।
न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः ॥

पुंसा सहैव पुंदेहे स्थितिः स्यात् वरदानतः ।
तज्जन्मनि वराः पापजाताभ्यो निज सत्स्त्रियः ॥(श्रेष्ठाः)
सर्वेषामपि जीवानां अन्त्यदेहो यथा निजः ।
मुक्तौ च निजभावः स्यात् कर्मभोगान्ततोपि च ॥ इति ।

नवमस्कन्धभागवते इलोपाख्यानं, भारते (शिखण्डी) अम्बोपाख्यानं चैतत्तत्त्वं निरूपयति ॥

**सर्वे जीवाः हरनुचराः ।**

स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्भावाभावौ द्विधेतरत् ।

तत्त्वसंख्यानेऽऽद्यपद्यं श्रीमध्वाचार्यैरुक्तम् । २-१-२२ to २७ भाष्ये— जीवानां चेतनत्वेपि अश्मादिवत् अस्वतन्त्रत्वात् स्वतः कर्तृत्वानुपपत्तिः । हिताकरणं अहितकरणञ्चास्ति ।

यथा दारुमयीं योषां नरःस्थिरसमाहितः ।
इङ्गयति अङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥
इति भारते ।

(अङ्गं हस्तादि । अङ्गानि अङ्गुल्यादीनि)

य आत्मानमन्तरो यमयति । नाहं कर्ता न कर्ता त्वं कर्तायस्तु स्वभावतः । इत्यादेः । २-३-४३ to ५० भाष्ये श्रीमध्वाचार्यैरुक्तम् ।

अंशा एव हि इमे जीवाः अंशीहि परमेश्वरः ।
स्वयमंशैरिदं सर्वं कारयत्यचलो हरिः ॥ (साक्षात्)

स्वांशश्चाथो विभिन्नांशो इति द्वेधांश इष्यते ।
अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः ॥

(सर्वोत्तमत्वम्)

तदेव नाणुमात्रेपि भेदः स्वांशांशिनो. क्वचित् ।
विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सादृश्यमात्रयुक् ॥

इति वाराहे ।

जीवाः हरेः भिन्नांशाः । मत्स्यादि तु स्वरूपांशः ।
"ममैवांशो जीवलोके जीवभूतः सनातनः ।"

(गीतायां १५-१७) इति ।

अंशाश्च देहयोग्यत्वाज्जीवाः बन्धादिसंयुताः ।
अनुग्राह्याश्चेश्वरेण न तु मत्स्यादिको हरिः ॥
अदेहबन्धयोग्यत्वाद्यथा सूर्यप्रभाक्षिणी ॥
यथामृतसमुद्रस्य श्लेष्मादेश्च द्विरूपता ॥
अनुग्राह्यत्वमन्यस्य तेनैवावृतिरोधनम् ॥ इति ।

ॐ आभास एव च ॐ (२-३-५०) इति सूत्रोक्तप्रतिबिम्बत्वाच्च त्रिविधजीवसमुदायस्य ।

द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः ।
प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च ।
प्रतिबिम्बांशका जीवाः प्रादुर्भावाः हरेः स्मृताः ।
प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु ॥
सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेष्यते ॥
जीवः ईशस्यानुपाधिरिन्द्रचापो यथा रवेः ॥

इति भाष्ये श्रीमध्वाचार्यैरुक्तम् । सोपाधिः दर्पणादिप्रतिबिम्ब-त्वं, अनुपाधिः स्वस्यातिरिक्तोपाधिरहितप्रतिबिम्बत्वम् । बिम्बाधीनत्वे सति किञ्चित्सादृश्यवत्त्वं प्रतिबिम्बत्वम् । इत्यर्थः । नानेन जीवेश्वराभेदः । आभिमुख्यादिविरुद्धधर्माधिकरणत्वात् । दर्पणगतानां पर्वतकस्तूरीगुडाग्निप्रतिबिम्बानां यथाक्रमं चलत्वा-चलत्व, सुरभित्वासुरभित्वमाधुर्यामाधुर्यदाहकत्वादाहकत्वा-दयः विरुद्धधर्माः । 'यथैषा पुरुषे छाया एतस्मिन्नेतत् आततम्' (प्र-उ-३-३) इति च देहस्य छाया पुरुषाधीना तत्प्रतिरूपा भवति । तथैतत्प्रतिबिम्बरूपं जीवजातं तदधीनतया वर्तते ।

एवं बिम्बाधीनक्रियया, प्रतिबिम्बक्रिया । अतः जीवानां हरेरनुचरत्वम् । बिम्बरूपिहरेः ज्ञानानन्दादिना किञ्चित्सा-दृश्यं मुक्तियोग्यानाम् । इतरेषां तु करचरणादिमत्वचेतन-त्वादिना । यतस्तमोयोग्याः दुःखाज्ञानादिस्वरूपिणः, नित्य संसारिणस्तु मिश्रस्वरूपिणः इति ज्ञातव्यम् । २-३-५१ to ५३ प्रतिबिम्बानां वैचित्र्येऽनाद्यविद्याकर्मादिवैचित्र्यमेवकारणम् ।

दर्पणादौ बिम्बभूतमुखनाशेन वा दर्पणरूपोपाधिनाशेन वा तत्सन्निधिनाशेन वा तत्त्रय नाशेन वा नाशो दृष्टः । न तथा चेंतनेषु जीवेषु बिम्बरूपिहरेः न नाशः नित्यत्वात् जीवानां प्राकृतदेहाः बाह्योपाधयः संसारे । मुक्तौ तु स्वरूपदेहा उपाधयः भागवत ता ४ स्कन्धे—

जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव हि ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ।। इति

ईश्वरस्य सर्वत्र सदा व्याप्तत्वात् सन्निधिरपि नित्यः। अतः जीवेश्वराणां बिम्बप्रतिबिम्बभावः अनादिनित्यः। भारत-तात्पर्यनिर्णये १-१५ श्रीमध्वाचार्यैरुक्तम्।

आभासका त्वथ रमास्य मरुत्स्वरूपात्
श्रेष्ठापि अजात् तदनुगीः शिवतो वरिष्ठा।
तस्याः उभा विपतिनी च गिरः तयोस्तु (गरुडभार्या)

इत्यादिकाः क्रमश एव यथा पुमांसः॥ इति पुंसोपि उत्तम-स्त्रीप्रतिबिम्बाः। तदधीना चित्त्वेन करचरणादिमत्वेन सादृश्यवन्तः इत्यशेषमतिमङ्गलम्॥

इतःपरं तारतम्यविचारः॥

## ५. नीचोच्चभावं गताः

भारततात्पर्यंनिर्णये १-८०-९६ श्री मध्वाचार्यैरुक्तम्

सर्वेषां च हरिर्नित्यं नियन्ता तद्वशाः परे।
तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा॥
एतद्विना न कस्यापि विमुक्तिः स्यात्कथञ्चन।
स्वयोग्ययोपासनया तन्वा तद्योग्यया तथा॥
सर्वैर्गुणैर्ब्रह्मणा तु समुपास्यो हरिस्सदा॥
आनन्दो ज्ञस्सदात्मेति ह्युपास्यो मानुषैर्हरिः।
यथाक्रमं गुणोद्रेकात् तदन्यैः आविरिञ्चतः॥
ब्रह्मत्वयोग्या ऋजवो नाम देवाः पृथग्गणाः।
तैरेवाप्यं पदं तत्तु नैवान्यैस्साधनैरपि॥

एवं सर्वपदानाञ्च योग्याः सन्ति पृथग्गणाः ।
तस्मादनाद्यनन्तं हि तारतम्यं चिदात्मनाम् ॥
तच्च नैवान्यथा कर्तुं शक्यं केनापि कुत्रचित् ।
अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः ॥ इति ।

एवं मोक्षोपयोगि तारतम्यज्ञानं, तारतम्यञ्च जीवस्वरूपभूतं न केवलं संसारे, किन्तु मोक्षेपि सत् । स्वस्वयोग्यसाधनैरभिव्यज्यते । अतः साधनतारतम्यात् फलतारतम्यम् । न परमं साम्यम् सर्वदास्थितसाम्यस्य मोक्षेऽऽवरणनाशेनाभिव्यक्तिरेव परमत्वम् ।

ब्रह्मसूत्र तृतीयाध्याय तृतीयपादे उपासनातारतम्यं, चतुर्थाध्याये फलतारतम्यं च सविस्तरं प्रतिपादितम् । कठतैत्तिरीयादि उपनिषत्सु च ॥

१. कठोपनिषत्-१-३-१०, ११, भगवज्ज्ञानं तारतम्यान्तसत्वेन संपाद्यमिति भावेन देवतातारतम्यमाह—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥ १० ॥
महतः परमव्यक्तं अव्यक्तात्पुरुषः परः ।
पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः ॥ ११ ॥

इदं मन्त्रद्वयं जडानामेव तारतम्यं वक्ति इत्यन्यथाप्रतीति निरासाय भाष्ये श्रीमध्वाचार्यैरुदादाहृतम् ।

देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः ।
सोमवित्तपसूर्याप्पाः अश्व्यग्नीन्द्रेन्द्रसूनवः ॥

यमो दक्षश्चेन्द्रियेशाः सौपर्णी वारुणी तथा ।
उमेतिचार्थमानिन्यः तिस्रो द्विद्व्येकदेवताः ॥
मनोभिमानिनः रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।
ते श्रेष्ठा अर्थमातिभ्यः तेभ्यो बुद्धिः सरस्वती ॥
तस्याः ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।
तस्यास्तु पुरुषो विष्णुः पूर्णत्वात् नैव तत्समः ॥
कश्चित्कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा ।
(श्रेष्ठः अस्ती हि )

२. तैत्तिरीये २ वल्ली १७ to २० मन्त्राः—

सैषानन्दस्यमीमांसा भवति । युवा स्यात्साधुयुवाध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः ॥ १७ ॥

श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणां आनन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं आजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः ॥

ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । (दक्षः) । श्रोत्रियस्य चाकामह-

तस्य । ते ये शतं इन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । (इन्द्रः) श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेः (रुद्रः) आनन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दा. । स एको ब्रह्मण आनन्दः । एवं ४-४-१९ भाष्ये च । तद्भाष्यम्— सर्वेपि ज्ञानिनः ब्रह्म प्राप्नुवन्ति । तत्रापि सम्यक् प्राप्तिः चतुर्मुखब्रह्मण एव । अन्येषां तु तारतम्येन इति उकारेण समासतः (मंत्रे १३) कथितमेव- प्रश्नोत्तरम् विस्तरेणमुक्तौ आनन्दतारतम्यकथनपूर्वकं वक्तुं सैषानन्दस्य इत्यादिको ग्रन्थः ।

............... विदुषां नियमेन तु ।
स्यादेवमोक्षस्तत्रापि ह्यानन्दस्य विचित्रता ॥

तत्र मानुषोत्तममारभ्य विरिञ्चिपर्यन्तं आनन्दतारतम्यं वक्तुं पूर्वावधिभूतं वक्तुं उक्तचक्रवर्तिनः विशेषणान्याह । युवा इति युश्चासौ वा च युवा । विष्णुना सह गच्छतीति । साधुगुणैर्युक्तत्वात् साधुयुवा । नित्यतरुणो वा युवा । साधुना विष्णुनायुतः साधुयुवा इति वा । अध्यायकः सम्यगध्ययनकर्ता । सम्यक्त्वञ्च मुक्त्याख्याध्ययनफलवत्वम् । आशिष्ठः नित्यपूर्णसुखवान् । एवं गुणोपेतः यदिमुक्तः स्यात् तस्य चक्रवर्तिनः त्रेतायुगे संसार दशायां इयं सर्वा पृथिवी वित्तेन पूर्णास्यात् । तदा तस्य यत्सुखं स एको मानुष आनन्दः । मुक्तमनुष्योत्तमानन्दः । मुक्तत्वज्ञापनाय श्रोत्रियस्य च अकामहतस्य इति विशेषणद्वयस्याभ्यासः ॥ सम्पूर्णश्रुतिफलं प्राप्त एव हि श्रोत्रियः । स च मुक्त एव नान्यः । मुक्तेरेव तत्फलत्वात् । मुक्तत्वादेवाकामहताः

अवाप्तकामत्वेन कामकृतोपद्रवशून्या इत्यर्थः । एकवचनं (श्रोत्रियस्येति) बहुवचनार्थकम् । [तथापि परैः सर्वं अमुक्तविषयतया एव व्याख्यातम्] ये साक्षात् देवप्रेष्याः ते देवगन्धर्वाः । चिरकालीनः लोकः चिरलोकः । स एव लोक येषां ते चिरलोक लोकाः देवेषु अनाख्याताः अकथिताः अप्रसिद्धाः । देवकुले जाताः आजानजाः । ये बल्यादयः कर्मणा मध्ये देवत्वं प्राप्ताः ते कर्मदेवाः । सृष्टयादौ देवत्वं प्राप्ताः तत्त्वाभिमानिनः देवाः ॥

अत्रेन्द्रशब्दः दक्षप्रजेश्वरपरः । सहीन्दुं रारयत् पुरा । चन्द्रं क्षयमनयत् । दक्षपुत्रीः अश्विन्याद्याः परित्यज्य रोहिण्यामेवात्यासक्ते चन्द्रे दक्षेण बहुवारं बोधितोपि यदा न जग्राह ताः तदातिकुपितः दक्षः कलाक्षयं प्राप्नुहीति शशापेति पुराणेषु ॥

बृहस्पतिशब्दः बृहंश्चासौ पतिश्चेति इन्द्रपरः दक्षबृहस्पत्योः समत्वात् एवमर्थः ॥ प्रजापतिशब्दः रुद्रपरः । प्रजननेशितृत्वहेतुना ॥ ब्रह्मणश्चतुर्मुखस्य । (लक्ष्म्याः आनन्दः एतस्मात् कोटिगुणः । हरेः आनन्दः एतस्याः अनन्तगुणः ॥)

आनन्दतारतम्यं तत्तज्ज्ञानभक्तिबलादि तारतम्योपलक्षकम् ।

३. सूत्रभाष्ये श्रीमध्वाचार्यैरुक्तमुदाहृतञ्च । ३-२-२०

साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्श्रुतौ श्रुताः ॥ इति ब्राह्मे ॥

भगवद्भक्तिः पुरुषेषु तारतम्येन तिष्ठति । तदनुसारेण भगवान् फलं प्रयच्छति भक्त्यादेः वृद्धिह्रासभाक्त्वं आधिक्यं न्यूनता विद्यते ब्रह्मादीनाम् । सर्वेषां भक्तत्वेऽन्तर्भावात् । एवमङ्गीकार

एवेश्वरस्य सामञ्जस्यं वैषम्यादिदोषशून्यत्वं भवेत्, नान्यथा ॥ न समभक्तीनां फलवैषम्यम् ॥ ॐ दर्शनाच्च ॐ ३-२-२१ अथात आनन्दस्य मीमांसा भवति इत्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेष (भेद) दर्शनात् । अथातः इति पाठः शाखान्तरीयः । इत्यदोषः । ३-३-११ भाष्ये श्री मध्वाचार्यैरुदाहृतम् ।

सम्पूर्णोपासनाद्ब्रह्मा संपूर्णानन्दभाग्भवेत् ।

इतरे तु यथायोग्यं सम्यक् मुक्तौ भवन्ति हि ॥ इति पाद्मे ३-३-३३ भाष्ये श्री मध्वाचार्यैरुक्तम् ।

यथा यथाऽधिकारः विशिष्यते एवं मुक्तावानन्दः विशिष्यते ॥ "मनुष्येभ्यो गन्धर्वाणां, गन्धर्वेभ्यः ऋषीणाम् ऋषिभ्यः देवानां, देवेभ्यः इन्द्रस्य, इन्द्राद्रुद्रस्य, रुद्राद्ब्रह्मणः, एष ह्येव शतानन्दः' इति चतुर्वेदशिखायाम् ॥

अध्यात्मे च इति उदाहृतं श्री मध्वाचार्यैः ।

ज्ञानञ्चोपासनञ्चैव मुक्तावानन्द एव च ।
यथाधिकारं देवानां भवत्येवोत्तरोत्तरम् ॥ इति ।

ननु मुक्तावानन्दतारतम्यमेव नोपपद्यते । असमत्वे मुक्तानां परस्परविरोधमात्सर्यादि प्राप्तेः । लोके तथा दर्शनात् अतस्तारतम्यश्रुतयस्तु संसारविषया इति चेत् ३-३-३४ सूत्रम् तस्य मध्वभाष्यम् ।

ॐ अक्षरधियां तु अविरोधः सामान्यसद्भावाभ्यां औपसदवत् तदुक्तम् ॐ ॥ न चासमत्वेन विरोधः भवति । ब्रह्म-

धीत्वात् । रागद्वेषादिदोषाभावसाम्यात् उत्तमेभ्यः अन्येषां भावाच्च । अन्यथा अपरोक्षज्ञानं तत्साध्यमोक्षश्च न स्यात् । रागमत्सरादिदोषव्यपोहेन बहुजन्मसु निरन्तरोपासकानां हि तद्भवति ॥ औपसदवत् शिष्यवत् । उक्तञ्च तुरश्रुतौ– "नानाविधा जीवसंधाः विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः । दोषाभावाद्गुरुशिष्यादिभावात् लोकेऽपि नासौ किमु तेषां विमुक्तेः ॥ इति ।

४-४-१८ भाष्ये, न चायोग्यं विमुक्तोपि प्राप्नुयान्न च कामयेत्॥ इति ।

४-४-१९ भाष्ये, तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः । (सायुज्यम्)

पूज्यन्ते च अवरैः ते तु सर्वपूज्यश्चतुर्मुखः ॥

सर्वेषामेतच्चतुर्विधो मोक्षः संभवति । किन्तु तत्तद्योग्यतानुसारेणैकैक एव नियतः । भगवल्लोके एव यत्र कुत्रचित् स्थित्वा भोगभोक्तृत्वं सालोक्यम् । मनुष्योत्तमास्तत्राधिकारिणः । भगवत्समीपे स्थित्वा भोगभोक्तृत्वं सामीप्यम् । ऋष्यादयः तत्राधिकारिणः । चतुर्भुजत्वशङ्खचक्राद्यायुधवत्व पीताम्बरधारित्वसाम्यं सारूप्यमुच्यते । जयविजयादिद्वारपादयः तद्योग्याः। श्री भागवते ३-५ २८

'मत्तद्विरेफवनमालिकया निवीतौ

विन्यस्तयासित चतुष्टयबाहुमध्ये' इति ॥ ६-१-३४, ३५

विष्णुदूताः—

सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः ।
किरीटिनः कुण्डलिनः लसत्पुष्करमालिनः ॥
सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः ।
धनुर्निषङ्गासिगदाशङ्खचक्राम्बुजश्रियः ॥ इति ।

८-४-६ गजेन्द्रो भगवत्स्पर्शात् विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ इति ।

भगवच्छरीरं प्रविश्य परमात्मानन्दादीन् परित्यज्य स्वस्वरूपानन्दादिभोगः सायुज्यम् । तद्भाजस्तु देवाः । देवानां स्वस्वोत्तमप्रवेशेन परमात्मशरीरप्रवेशेन च । ब्रह्मणस्तु परमात्मशरीरप्रवेशेनैवेति विशेषः । यथोक्तमणुभाष्ये ४-३ श्रीमध्वाचार्यैः ।

उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगान् तदन्तर्बहिरेव वा ॥
वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम् ॥ इति ।

४-४-२० भाष्ये । स्वाधिकारेण वर्तन्ते देवा मुक्तावपिस्फुटम् ।
बलिं हरन्ति मुक्ताय विरिञ्चाय तु पूर्ववत् ॥
वराहे च ।

एवं बहुप्रमाणसिद्धम् तारतम्यम् । कल्यादिषु च तारतम्यं ज्ञेयं ग्रन्थान्तरात् । परमं साम्यमुपैति इति श्रुतेस्तु का गतिरिति चेत् । न्यायामृते ४-५ pages ६४०-६४ श्रीव्यासराजेनोक्तम् । आनन्दतीर्थः नेमां श्रुतिं विसस्मार । सा तु दुःखाभावसत्यकामत्वादिना सरःसागरयोरिव स्वयोग्यानन्दपूर्त्या च साम्यात् ।

'लिङ्गभेदः परानन्दो दुःखाभावः समा मता' इति स्मृतेः। अन्यथा मुक्तस्य स्वातन्त्र्याद्यपि स्यात्। ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ४-४-२२ इति सूत्रस्य मात्रशब्दस्य तन्मतेपि भोगमात्रे मुक्तस्य ब्रह्मसाम्याल्लिङ्गात् जगद्व्यापारवर्जमिति व्याख्यातत्वात् अवधारणार्थः मात्रशब्दः न कार्त्स्न्यार्थः। सत्यकामत्वञ्च जगत्स्रष्टृत्वादाविवाधिकानन्देपि कामस्यैवाभावाद्युक्तम्॥ इत्यादि। तारतम्यबोधकं स्तोत्ररत्नमेकं विलसति। तत्संग्रहस्तु—

सर्वोत्तमो विष्णुरथो रमा च ब्रह्मा च वायुश्च तदीयपत्न्यौ।
येऽन्ये च देवाः सततं प्रसन्नाः हरौ सुभक्तिं मम संदिशन्तु॥

इतः परं मुक्तिः नैजसुखानुभूतिः—

## ६. मुक्तिर्नैजसुखानुभूतिः[1]

भागवतम् २-१०-६ मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः इति श्री व्यासवचनम्। सज्जीवस्य ज्ञानानन्दादि स्वरूपत्वं उच्यते। २-३-३१ भाष्ये श्रीमध्वाचार्यैरुदाहृतम्। विज्ञानात्मा सह देवैश्च सर्वैः (४-११) इति विज्ञानस्वरूपत्वमुच्यते। स आनन्दः स परेणामुं लोकं नीयते स विमुच्यते इति श्रुत्यन्तरे आनन्दरूपः (बलरूपः ओजोरूपश्च) इत्यानन्दादिरूपत्वमुच्यते। आनन्दादिगुणानां प्रत्येकमभेदे तात्पर्यज्ञापनार्थं स इत्यभ्यासः।

---

1. इयं मुक्तियोग्यजीवविषया। नैजदुःखानुभूतिः, नैजसुखदुःखानुभूतिः एककाल इत्युपलक्षणार्था। जीववैविध्यात् मोक्षवैविध्यम्॥

बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ॥ इति

गौपवनश्रुतिः । राजसत्तामसजीवानां तु, भविष्यत्पर्वणि—

नित्यानन्दज्ञानबलाः देवा नैवं तु दानवाः ।
दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः ॥ इति ।
नित्यानन्दो नित्यज्ञानः नित्यबलः परमात्मा (सुराश्च)
नैवमसुराः । एवमनेवं च मनुष्याः इति ह्याग्निवेश्यश्रुतिः ॥

देवाः मुक्तियोग्यजीवाः । दानवाः तमोयोग्यजीवाः । नैवं देववन्नकिं तर्हि दुःखानुभवमात्रयोग्याः । योग्यत्वञ्च संसारेऽप्यस्ति । मात्रशब्देन सुखोपलब्धिः व्यावर्त्यते । मानुषाः राजसजीवाः सुखदुःखमिश्रस्वरूपाः । असुराः तमोयोग्यजीवाः मुक्तियोग्यवन्न, किन्तु तद्विरुद्धदुःखमिथ्याज्ञानस्वरूपाः । राजसाः आनन्दादिरूपाः दुखादिरूपाश्च । हिशब्दः एवं जीवस्वरूपानङ्गीकारे प्रसिद्धश्रुतिविरोधापत्तेः सूचकः ॥

नन्वेवमनुपपन्नम् । मुक्तियोग्यानां दुःखस्याप्यनुभवात् विपरीतज्ञानस्य दर्शनाच्च । एवं दैत्यानां सुखादेरपि अनुभवात् राजसानामपि मिश्रत्वमयुक्तम् । संसारे केवलसुखदुखयोरनुभवात् इति चेत्—

तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम् ।
विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिः ॥
सम्यग्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् ।
विपरीतं तु दैत्यानां ज्ञानस्यैवं व्यवस्थितिः ॥ इति च ।

तेषां यत्स्वरूपात् अन्यथा दृश्यं दुःखादि तत् जीवस्वरूपोपाध्यतिरिक्त बाह्यदेहनिमित्तम् । उपाधिनिवृत्तिः कुतः? स्वस्वयोग्येन विशेषज्ञानेन द्वेषादिना चावरणानिवृत्त्या आविर्भूतस्वरूपेण व्यवस्थितिर्भवति ।

स दुःखाद्विमुक्तः आनन्दी भवति । सोऽज्ञानाद्विमुक्तः ज्ञानी भवति । सोऽबलाद्विमुक्तः बली भवति । स नित्यः निरातङ्कः अवतिष्ठत इति पैङ्गिश्रुतिः ॥

नैवमानन्दादिरूपत्वस्याननुभवात् इति चेत् । ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ (२-३-३१) आदिपदेन स्त्रीत्वम् । स्त्रीपुंरूपचेतनस्य बाल्ये विद्यमानमेवापत्योत्पादनशक्तिर्यौवने यथाऽभिव्यज्यते तथा सतामेवानन्दादीनां व्यक्त्यपेक्षया तदुक्तिः । एवं व्यक्तेरनङ्गीकारे—

ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गः अन्यतरनियमो वा अन्यथा ॐ (२-३-३२) सूत्रम् ।

मुक्तियोग्यानां आनन्दादीनां नित्यमनुभवः प्रसज्यते । असुराणामानन्दाद्युपलब्धिविरुद्धदुःखाद्युपलब्धिः नित्यं प्रसज्यते । न च कदाचित् सुखाद्यनुभवः । एवं राजसानां मिश्रत्वात् एककाले सुखदुःखयोरनुभवः प्रसज्यते । अतःस्वरूप भूतानां आवरणमङ्गीकार्यम् ।

आवरणञ्चेश्वरेच्छाविद्याकामकर्मलिङ्गशरीरत्रिगुणात्मकमनःस्थूलशरीरादीनि । मध्वसिद्धान्तसारे १४७ पुटे श्री-

पद्मनाभसूरिभिरुक्तम् । भागवततात्पर्ये २ स्कन्धे श्रीमध्वाचार्यैरुदाहृतम्—

अशरीरस्य जीवस्य शरीरोत्पत्तिकारणम् ।
(प्राकृतशरीरहीनस्य)
ईश्वरेच्छा प्राथमिकी तां विना न हि किञ्चन ॥
द्वितीया प्रकृतिः प्रोक्ता तद्रूपा हि गुणास्त्रयः ॥

गीता (५-१५) अविद्यायाः आवारकत्वं - "[1]अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" ॥ कर्मणः बन्धकत्वम् - कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते' । अनादिकर्मणाबद्धः जीवः संसारमण्डले । (अनुव्याख्याने)

कामस्य बन्धकत्वम्– गीता ३-३७, ३८

काम एष क्रोध एषः रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥
धूमेनाव्रियते वह्निः यथाऽऽदर्शो मलेन च ।
यथोल्बेनावृतो गर्भः तथा तेनेदमावृतम् ॥

(सात्विकादित्रिविधजीवानां बन्धकत्वे यथाक्रमं दृष्टान्ताः)

लिङ्गशरीरम् । दशेन्द्रियाणि सूक्ष्मरूपाणि । पञ्चप्राणाः सूक्ष्मरूपाः मनश्च सूक्ष्मरूपम् । आहत्य षोडशकलोपेतम् ॥

पञ्च पञ्चैव ते सर्वे प्राणबुद्धीन्द्रियाणि च ।
कर्मेन्द्रियाणि च तथा तस्मात्पञ्चविधं स्मृतम् ॥

---

1. अज्ञानस्वरूपस्य स्वप्रकाशस्यापि जीवस्य परमेश्वरेच्छायाऽज्ञानं भवत्येव ।

मोक्षः । तद्भावे जन्मान्तराणि इत्यनियमः । तद्भाष्ये मध्वोदाहृतम् ।

विद्वान् अमृतमाप्नोति नात्र कार्या विचारणा ।
अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ॥

न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः ॥ इति नारायणाध्यात्मे । यत्-यदि । तद्देह एव । गच्छति अमृतं ॥

प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः । अणुभाष्ये श्री मध्वोक्तम् । अप्रारब्धं पुण्यं, इष्टमनिष्टं चेति द्विविधम् । यत् मोक्षे अतिशय साधनं तदिष्टम् । यत् स्वर्गादिसाधनं तदनिष्टम् तत्रानिष्टपुण्यस्यापि अश्लेषः । "तस्य पुत्राः दायमुपयन्ति सुहृदः साधुकृत्यां, द्विषन्तः पाप कृत्याम्" इति शाट्यायनश्रुतिः। ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ (४-१-१९)

प्रारब्धपुण्यपापे भोगेन विनाश्य, अनन्तरं ब्रह्म सम्पत्स्यते। अथेति नियमसूचकः । ब्रह्मणः शतब्रह्मकल्पपर्यन्तं पुण्यप्रारब्धफलं सत्यलोकाधिपत्यम् । तदनन्तरं मोक्षः । गरुडशेषयोः ५० ब्रह्मकल्पं पुण्यपापप्रारब्धफलं इत्यादि ॥

आरब्धपुण्यपापस्य भोगेन क्षपणादनु ।
प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ॥

१. ब्रह्मद्विट् तमोयोग्यः । २. ब्रह्मज्ञानी मुक्तियोग्यः ॥

२. उत्क्रान्तिः—

देवानां स्वपदं गतानां, स्वोत्तमप्रवेशात्मकः लयः। तद्भिन्नानां मानुषशरीरिणां ज्ञानिनां देहात् उत्क्रान्तिश्च चतुर्थाध्याये द्वितीयपादे उच्यते ।

लयः । ४-२-१ ॐ वाङ्मनसि दर्शनात् शब्दाच्च ॐ ।

वागभिमानिन्युमा मनोऽभिमानिनि रुद्रे विलीयते । वाचः मनोवशत्वदर्शनात् । "तस्य यावन्नवाङ्मनसि सम्पद्यते" (छा. ६-१५) इति शब्दाच्च ॥ 'उमावैवाक् समुद्दिष्टा मनो रुद्र उदाहृतः । ४ २ ३ भाष्ये मनः प्राणे इत्युत्तरवचनात् मनोभिमानी रुद्रः प्राणे वायौ विलीयते । वायोर्वारुद्रः उदेति वायौ विलीयते तास्मादाहुः वायुर्देवानां श्रेष्ठः" इति च कौण्डिन्यश्रुतिः ॥

४-२-४ भाष्ये । स प्राणः परमात्मनि विलीयते । सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति । प्राणं देवा अनुप्राणन्ति । प्राणः परं अनुप्राणिति, तस्मादाहुः प्राणस्य प्राण इति ।

४-२-५ विशिष्योक्तेभ्यः अन्येषां देवानां भूताभिमानिषु लयः।
४-२-१५ प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते ।
४-२-७ ॐ समना च असृत्युपक्रमात् अमृतत्वञ्चानुपोष्य ॐ

देशतः कालतश्च व्याप्त्या समः ना (नृशब्दः) परमपुरुषः यस्याः सा समना लक्ष्मीः । संसारानुपक्रमात् संसारसंबन्धाभावात् स्वतः अनुपास्यैवामृतत्वं नित्यमुक्तत्वं नतु लयस्तस्याः । तेजः परस्यां देवतायां इति लयोक्तिस्तु (भागवता २ स्कंध)

"हरेरप्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः" इति ।
'समाना' इति इतरेषां पाठः ।

उत्क्रान्तिः । ४-२-१७ सूत्रे देवभिन्नानां ज्ञानिनां उत्क्रान्तिकाले हृदयस्याग्रज्वलनं भवति । (बृ. ६-४-२) "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते" इति । तत्प्रकाशितद्वारः निष्क्रामति ।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

इति गीता (८-१६) स्मृतेः । विद्याशेषगत्यनुस्मरणयोगाच्च । 'शतञ्चैकाच, हृदयस्य नाड्यः तासां मूर्धानामभिनिःसृतैका (सुषुम्ना इति) । तयोर्ध्वंगायन् अमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥" (कठ-२-६-१६) इति । ४-२-२ सू. ॐ अतश्च अयनेऽपि हि दक्षिणे ॐ तद्भाष्ये उदाहृतं श्रीमध्वाचार्यैः ॥ "दक्षिणे मरणाद्याति स्वर्गं ब्रह्म उत्तरायणे ।"

इत्युक्तेऽपि ज्ञानिनः दक्षिणायनोत्क्रान्तिः युज्यते ॥

शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः ।
तावन्त एव निर्दिष्टाः उत्तरायणरश्मयः ॥
ते सर्वे देहसम्बद्धाः सर्वदा सर्वदेहिनाम् ॥
महर्लोकादिगन्तार उत्तरायणरश्मिभिः ॥
निर्गच्छन्तीतरैश्चापि यैरेष्टव्या इतरागतिः ।
उत्तरं दक्षिणमिति त एव तु निगद्यते ॥

न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् ।
दयाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ।
अत्युत्तमानां केषाञ्चित् न विशेषोऽस्ति कालतः ॥

इति नारायणाध्यात्मे । १) भीष्मादीनां, २) भीष्मादेरपि उत्तमानाम् ॥

३. मार्ग—

उत्क्रान्तानां ब्रह्मप्राप्तौ मार्गः गम्यश्च चतुर्थाध्याय तृतीय पादे उच्यते ॥ ४-३-१ सू. ॐ अर्चिरादिना तत्प्रथितेः ॐ

तत्रार्चिषः तन्नामकाग्निपुत्रस्य प्राप्तिरेव प्रथमा । तद्-भाष्ये श्रीमध्वोदाहृतवचनं च—

द्वावेव मार्गौ प्रथितौ अर्चिरादिर्विपश्चिताम् ।
धूमादिः कर्मिणाञ्चैव सर्ववेदविनिर्णयात् ॥

ननु गीतायां ८-२४ 'अग्निर्ज्योतिरहः शुक्ल' इत्यग्नेः प्राथम्यमुच्यते । अत्र ज्योतिश्शब्दितस्यार्चिषः प्राथम्यं कथमिति चेत्—

अग्निज्योतिरितिद्वेधैवार्चिषः सम्प्रतिष्ठितिः ।
अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्मसंव्रजम् ॥
एकस्मिंस्तु पुरे संस्थः द्विरूपोऽग्नेः सुतो महान् ॥

इति ब्रह्मतर्के ॥ अर्चिषः एव अग्निज्योतिरिति द्विरूपम् । अतः न विरोधः ॥ ४-३-५ भाष्ये श्रीमध्वोदाहृतम् —

उत्क्रान्तस्तु शरीरात्स्वात् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रञ्च योऽसौ वाम्नाऽऽतिबाह्निकः ॥
ततोऽह्नः पूर्वपक्षं चाप्युदक् संवत्सरं तथा ।
तटितं वरुणञ्चैव प्रजापं सूर्यमेव च ॥
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिनं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥ इतिब्रह्मतर्के ।

१. उत्तरायणाभिमानी, २. दक्षप्रजेश्वरम्, ३. भारतीं, ४. ततः परं, वायुं इति वा । ततः, परं मुख्यं वायुं इति वा ॥

एवं मुख्यवायुलोक एव अन्तिमप्राप्यः ब्रह्मप्राप्तिमार्गेषु इति ॥ ४-३-७ सू. ॐ कार्यं बादरिः अस्य गत्युपपत्तेः ॐ

(छा. ५-१०-२) "स एनान् ब्रह्म गमयति," इति । स वायुः कार्यं उत्पत्तिमत् चतुर्मुखाख्यं ब्रह्म प्रापयति इति शुकः मन्यते । ॐ परं जैमिनिः मुख्यत्वात् ॐ४-३-१२ ब्रह्मशब्दस्य परमात्मन्येव मुख्यत्वात् । परमेव ब्रह्म गमयति इति जैमिनिः मन्यते ॥ तत्राधिकारिभेदेनोभयप्राप्तिः न विरोधः इति सिद्धान्तयति सू ॐ अप्रतीकालंबनान्नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्च ॐ ४-३-१५.

तद्भाष्ये श्री मध्वोदाहृतम्—

प्रतीकं देह उद्दिष्टः येषां तत्रैव दर्शनम् ।
न तु व्याप्ततया क्वापि प्रतीकालंबनास्तु ते ॥
अप्रतीकाः देवतास्तु ऋषीणां शतमुत्तमम् ।
राज्ञां च शतमुद्दिष्टं गन्धर्वादिशतं तथा ॥

इति गारुडवचनात् उभयत्रोक्तदोषाच्च अप्रतीकालंबनात् परं (ब्रह्म) नयति । "स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत्कर्म कुरुते, यत्कर्म कुरुते तदभिसम्पद्यते"(बृह-६-४-५) इति श्रुतेश्च । अन्यान् कार्यं (ब्रह्म) नयतीति भगवन्मतम् ॥

## ४. भोगः

चतुर्थाध्यायस्य चतुर्थपादे भोग्यानुभवः साध्यते ।

सू. ॐ सम्पद्य अविहाय स्वेन शब्दात् ॐ ४-४-१.

तद्भाष्ये श्रीमध्वोदाहृतम् "स य एवं वित् एयं मन्वानः, एवं पश्यन्, आत्मानमभिसम्पद्य, एतेनात्मना, यथाकामं सर्वान् कामान् अनुभवति" इति सौपर्णश्रुतेः ॥ "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ॥" छा. ८. ३. ४. इति च

सर्वान् कामानित्यस्य विवरणं सू. ॐ जगद्व्यापारवर्जं ॐ ४-४-१७. तद्भाष्ये श्री मध्वोदाहृतम् "सर्वान् कामानाप्त्वा अमृतः समभवत्" (ऐ-आ २-५-४) इत्युच्यते । तत्र सृष्ट्यादिभ्योऽन्यान् व्यापारान् आप्नोति ॥

सू. ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ४-४-८ । तद्भाष्ये श्रीमध्वोदाहृतम् । न तेषां भोगादिषु प्रयत्नापेक्षा । स यदि पितृलोककामो भवति, "सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" (छा. ८-२-१) इत्यादि श्रुतेः ॥ सू. ३-४-१ भाष्ये श्री मध्वोदाहृतम्—

यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्चकामान्
तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः
मुण्ड-३-१-१० इति शब्दात् ॥

श्रीमत्सुमध्वविजये११ सर्ग ७८ श्लोके श्रीनारायणपण्डितः वर्णयति
यं यं सुखी कामयतेऽर्थमत्र सङ्कल्पमात्रात् सकलोपि स स्यात् ।

इत्येव वेदा अपि वेदयन्ति मुक्ति ततः को विभवातिरेकः॥ इति।
४-४-१९ सूत्रभाष्ये श्री मध्वोदाहृत प्रमाणानुसारेण नीचोच्च-
भावंगताः इत्यत्रास्माभिः व्युत्पादितक्रमेण मोक्षेपि तारतम्येन
यथायोग्यं सालोक्यादि चातुर्विध्येन श्री वैकुण्ठादि भगवल्लो-
केषु भोगान् भुञ्जताः ॐ अनावृत्ति शब्दात् अनावृत्तिश्शब्दात्
ॐ (४-४-२३ सू.) "न च पुनरावर्तते न च पुनरावर्तते" (छा.
८-१५-१) इत्यादि श्रुतिभ्यः न संसारं प्राप्नुवन्ति ॥

गीतायामपि (१५-६)'यद् गत्वा न निवर्तन्ते तद्धाम परमं मम ॥
इति॥ मध्वसिद्धान्तसारे १६४ पुटे श्री पद्मनाभसूरिणा विरचितम्

ननु भागवते ३ स्कन्धे वैकुण्ठवासिनां जयविजयादीनां
सनकादिशापेन भूमावुत्पत्तेः प्रतिपादितत्वेन अनावृत्तिरिति
कथम् ? तृतीयस्कन्धतात्पर्ये श्रीमध्वाचार्यैरुक्तम् ।

अधिकारास्थिताश्चैव विमुक्ताश्च द्विधा जनाः ।
विष्णुलोकस्थितास्तेषां वरशापादियोगिनः ॥
अधिकारस्थिताः, मुक्तिं नियतं प्राप्नुवन्ति च ॥
विमुक्त्यनन्तरं तेषां वरशापादयो न तु ॥ इति ।

वैकुण्ठे मुक्तामुक्तस्थानद्वयं वर्तते इति ज्ञायते ।

मध्वसिद्धान्तसारे १५२ पुटे श्रीपद्मनाभसूरिणा समर्थितम्—

५५१ प्रकरणं तमोयोग्यानामपि द्वेषपरिपाकानन्तरं देहादुत्क्रमणं भवति । सर्वेषां कलिप्राप्तिः ।

५५२ प्रकरणं कलेस्तु ब्रह्मणा सह लिङ्गभङ्गः वायुगदाप्रहाराद्भवति । एतच्च गरुडपुराणादिना अवगन्तव्यम् ।

सङ्कर्षणमुखज्वालादग्धं भूमण्डलं यदा ।
वायोः गदाप्रहारेण तदा तल्लिङ्गभञ्जनम् ॥

इति विष्णुरहस्ये । उपपुराणे ।

५५३ प्रकरणं (१५३ पुटे) "नित्यसंसारिणामपि लिङ्गभङ्गः" ५५४ प्रकरणं । अन्यथा तत्स्वरूपमात्रस्य कदापि अनुभवाभावप्रसङ्गात् । साधनानुष्ठानवैयर्थ्यप्रसङ्गाच्च ॥ तद्व्याख्याने १५४ पुटे अनंकिते - तेषां सर्वदा सृतियोग्यत्वं नाम संसारावस्थायां यथा दुःखमिश्रसुखानुभवः तथा लिङ्गभङ्गानन्तरमपि सुखमिश्रदुःखानुभव एव । इयांस्तुविशेषः संसारे सुखानन्तरं दुःखं, दुःखानन्तरञ्च सुखम् । मुक्तौ तु युगपदेव सुखदुःखमिश्रस्वरूपानुभव. । मुक्तियोग्यस्य वैकुण्ठादि लोकवत् तमोयोग्यस्य तमोवत् नित्यसंसारिणां नियतस्थाना भावमात्रेणैव त्रिदिवनिरयभूगोचरान् नित्यबद्धान्' इति वायुस्तुतौ त्रिविक्रम पण्डितकृतायां सर्वदास्वर्ग निरय भूसञ्चारित्वेन च नित्यबद्धत्वव्यपदेशोपपत्तेश्च ॥ ५७२ प्रकरणं पुटे १५९. (मुक्तियोग्यानां) ब्रह्मणा सह विरजानदी स्नानेन लिङ्गभङ्गो-

जायते ॥ ५७३ विरजा नदी च प्रधान (प्रकृति) अव्याकृता-काशयोः मध्ये वर्तते । लक्ष्म्यात्मिका ॥ ५७५ तस्य भङ्गो नाम जीवबन्ध नाशः । स्वरूपत एव नाशः ईति केचित् ॥ **भोगस्थान**

**वैकुण्ठादिलोकमहिमा—**

भागवते–२-९-९ to

'तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास परं न यत्पदम् । व्यपेतसंक्लेशविमोहसाध्वसं स्वदृष्टवद्भिः विबुधै-रभिष्टुतम् ॥ ९ ॥

प्रवर्तते यत्र रजस्तमस्तयोः सत्वञ्च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरेः अनुव्रता यत्र सुरा [1]सुरार्चिताः ॥
श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहवः उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥
श्रीर्यत्ररूपिणी उरुगायपादयोः करोति मानं बहुधा विभूतिभिः॥
इत्यादि ॥

तथा ३–१५–१३—

ययुर्वैकुण्ठनिलयं सर्वलोकनमस्कृतम् ॥
वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः ॥
यत्र नैःश्रेयसं नाम वनं काम दुघैःद्रुमैः ॥
सर्वर्तुश्रीभिः विभ्राजत्कैवल्यमिव मूर्तिमत् ॥

वैमानिकाः सललनाः चरितानि यत्र गायन्ति लोकशमलक्षप-णानि भर्तुः ।

1. बाणवृषपर्व प्रह्लादादि साधवः असुराः ॥

पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः ।
कोलाहलः विरमतेऽचिरमात्रमुच्चैः भृङ्गाधिपे हरिकथामिव गायमाने ॥
वापीषु विद्रुमतटास्वमलामृताप्सु प्रेष्यान्विना निजवने तुलसीभिरीशम् ॥ इत्यादि ।

छान्दोग्ये—८-१२-३

एवमेवैष सम्प्रसादः अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमः पुरुषः । स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा [1]ज्ञातिर्वाऽ[2]ज्ञातिभिर्वा. . . . . ॥ सूत्राणि ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ १-३-१९ ॐ विहारोपदेशात् ॐ २-३-३४ इति ।

श्रीमध्वविजये महाकाव्ये श्रीनारायण पण्डिताचार्यैः ११ सर्गे वर्णनम् ॥ इत्यादि प्रमाणैः युक्तिमल्लिकायां श्रीवादिराजेश्वरैः (४५ पुटे) समर्थितम्—

नानाजनपदाकीर्णं वैकुण्ठं तद्धरेः पदम् ।
तन्मध्ये नगरी दिव्या सायोध्येति प्रकीर्तिता ॥
इति पाद्मस्य वचनात् यत् अयोध्या हरेः पुरी ।
हर्म्याणि रत्नभवनानि उद्यानोपवनानि च ।
वापीकूपतटाकानि सन्ति तत्र गृहे गृहे ॥
पशुपक्ष्यादिरूपेण जीवा एव पृथक् स्थिताः ।
संस्कृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता ॥

---

1. सहमुक्तैः । 2. पूर्वकल्पमुक्तैः ॥

अश्वोमान्यः गजोमान्यः धेनुर्मान्या दिवौकसाम् ।
वृक्षः कल्पतरुर्मान्यः लोको मान्यो हि योऽर्थ्यते ॥
पक्षी विष्णुरथो मान्यः सर्पो मान्यो हरेः प्रियः ।
स्त्रियश्चाप्सरसो मान्याः श्वानावपि च नाकिनाम् ॥
मान्यौ किल श्यामनामा[1] शबलाख्यश्च यः [2]श्रुतः ।
भूलोकस्थितपश्वादेः स्वर्गलोकस्थितेर्यदा ।
पूज्यता प्राकृतेऽप्यर्थे तदाविष्णोस्त्रिधामसु[3] ।
स्थितानां शुद्धसत्त्वानां ज्ञानानन्दस्वरूपिणाम् ॥
श्रुतिस्मृतीतिहासाद्यैः स्तुतानां किं न पूज्यता ॥
उत्तरोत्तरवस्तूनां उत्तमोत्तमतोचिता ॥

(हीनयोनित्वादिना न दूष्यं) यतः—

प्रकृष्टत्वाद्यथा विष्णोः मत्स्याद्याः व्यक्तिराशयः ।
प्रकृष्टश्च स संसारदूरत्वात् तद्वदेव हि ॥
ब्रह्मलोकाप्त[4] चण्डालाद्यशेषप्राणिसार्थपाः ।
इति नामार्थ तत्त्वज्ञाः मुक्तौ चेत्थं प्रचक्षते ॥
स्वर्नीतगर्दभश्[4]वादिः इति नामान्तरं किल ।
विषवृक्षफलाकारा शर्करा कृतकृत्रिमा ॥
धत्ते किं तिक्ततादोषं मुक्तास्ते तद्वदेव हि ॥
पक्वो वातापिदेहोपि भिक्षोः शाकादिरूपतः ।
रक्षःशक्त्या यथापूर्वं लक्ष्यते तत्क्षणे किल ।
अतो मौक्तं समस्तञ्च वस्तु भुक्तं च तैः पुनः ॥

---

1. बलि हरणे एतयोरपि श्यामायस्वाहेत्यादिना बलि दानं अस्ति ॥
2. यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ इतिश्रुतौ ॥
3. वैकुण्ठ,श्वेतद्वीप अनन्तासनारम्यम् । 4. वासुदेव सहस्रनामसु ॥

तथैव तिष्ठेत्तन्नित्यं स्याच्चाजं लिङ्गदेहवत् ।
तच्चिन्त्वतायामपि च किं वित्तं तव नश्यति ॥
सुरधेनुद्रुमाहीन्द्रवीन्द्रनद्यादिरूपिणः ।

मुक्ताश्वपशुपक्ष्याद्याः सन्ति चेत् किं ततोगतम् ॥ इत्यादि सर्वेपि दार्शनिकाः स्वस्वसमयप्रयोजनतया मोक्षमेवाङ्गीकुर्वाणाः स्वकीयप्रक्रियानुगुणमेव किञ्चिन्मोक्षस्वरूपं, स एवागमार्थः इति मन्यन्ते । एवं बहुधावर्णितत्वं अनुव्याख्याने ४-२-१. सूत्र व्याख्यानावसर श्रीमध्वेन—

वदन्ति वादिनो मोक्षं नानामतसमाश्रयात् ।
आश्रित्य प्रतिभामाह जिनस्तत्रातितामसीम् ॥
ज्ञानात्कर्मक्षयान्मोक्षः भवेद्देहाख्यपञ्जरात् ।
पञ्जरोन्मुक्तखगवदलोकाकाशगोचरः ॥
नित्यमूर्ध्वं व्रजत्येव पुद्गलःहस्तपादवान् ।
इति तत्केन मानेन समोक्षस्सं प्रदर्श्यते ॥

इत्यादिना ग्रन्थेनानूद्य तेषामयुक्तत्वं च निरूपितम् । स्वकीयं च पूर्वोक्तरीत्या सिद्धान्तितम् । स्यादेतत् इह खलु सर्वोपिजनः जैनो वा बौद्धो वाद्वैती वा अन्ये वा सुखमेव मे स्यात् । दुःखं मनागपिमाभूत् इति सुखमेवापेक्षते । न तूर्ध्वगतिम् शून्यभावं, जीवेश्वरैक्यं अखिलधर्महीनमानावेद्यस्वप्रकाशाद्वितीयब्रह्मस्वरूपावस्थानं वा । अतः सर्वाभिलाषापूरणसमर्थं सर्वप्रार्थितं च मोक्षस्वरूपं श्रीमध्व एव निःशेषाविद्यानिवृत्तिपूर्वकस्वपूर्णानन्दानुभूतिरेव मोक्ष इति वर्णितवान् ।

भज मध्वेशं भज मध्वेशं भज मध्वेशं प्रौढमते ॥
न वेदसदृशं वाक्यं न मोक्षसदृशं सुखम् ॥
इति सर्वमवदातम् ।

इतः परं अमला भक्तिश्च तत्साधनम् इति ।

## ७. अमलाभक्तिश्च तत्साधनम्

शास्त्रेषु मोक्षसाधनानि तत्र तत्र विहितानि । तेषां मध्ये विषयवैराग्यं भगवद्भक्तिः तदुपासना तत्साक्षात्कार इति चत्वारि । तानि च समकक्ष्याणि । आदौ वैराग्यं, तेन भक्तिः तयोपासना तया ज्ञानमिति श्रीमहाभारततात्पर्यनिर्णये प्रथमाध्याये ९९-श्लोकादिषु श्रीमध्वाचार्यैः उक्तम् । उदाहृतञ्च । भक्तिश्रैष्ठ्ये ॥

दानतीर्थतपोयज्ञपूर्वाः सर्वेऽपि सर्वदा ।
अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये ॥ इति ।
भक्त्यर्थान्यखिलान्येव भक्तिर्मोक्षाय केवला ॥
निःशेषधर्मकर्तापि अभक्तश्चेन्नरके हरेः ।
सदा तिष्ठति भक्तश्चेद्ब्रह्महापि विमुच्यते ॥
धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत ।
पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरे ॥
भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुञ्च परन्तप ।। गीता ११-५४
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥
इत्यादि ।। (गीता १८-५५)

भागवतमाहात्म्ये पाद्मपुराणे, अ-२-१९ to २१ श्लोकाः–

नृणां जन्मसहस्रेण भक्तौ प्रीतिर्हि जायते ।
कलौ भक्तिः कलौ भक्तिः भक्त्या कृष्णः पुरःस्थितः ।।
दुर्वासाः दुःखमापन्नः पुराभक्तविनिन्दकः ।।
अलंव्रतैरलंतीर्थैरलंयागैरलंमखैः ।

अलं ज्ञानकथालापैः भक्तिरेकैव मुक्तिदा ।। इत्यादि ।
आभाणकम्– भगवद्भक्तिहीनस्य जातिश्शास्त्रं जपस्तपः ।

अप्राणस्येव देहस्य मण्डनं लोकरञ्जनम् ।। इति ।
इत्यादिना भक्तिरावश्यकी इति सिद्धम् ॥

श्री जगन्नाथयतिकृत भाष्यदीपिका समलंकृतब्रह्मसूत्रभाष्ये (अ. ३. पा. ३. सू. ५१) व्याख्यातम् । अनुबन्धाधिकरणम् ।

अत्र ब्रह्मज्ञानसाधनस्योपासनस्य भक्तिपूर्वकत्वं समर्थ्यते । प्रबलगुरुप्रसादेनैव ब्रह्मदर्शनसंभवात् न तदर्थं भक्त्यादिकमपेक्षितं इति पूर्वपक्षे सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे—

ॐ अनुबन्धादिभ्यः ॐ । भाष्यं श्री मध्वस्य न केवलं श्रवणादिभिः गुरुप्रसादेन च ब्रह्मदर्शनम् । किन्तु भक्त्यादिभिश्च । (अनुबंधस्तु भक्तिः स्यात् बन्ध स्नेह उदाहृतः ।) इत्यभिधानात् तत्रैव ३-३-५४ सूत्रव्याख्यानावसरे - भाष्यं श्रीमध्वस्य— "भक्तिरेवैनं नयति । भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुषो भक्तिरेव भूयसीं इति (माठर) श्रुते. न परमात्मना दर्शनं इति चेन्न । "तस्यैव आत्मा विशते ब्रह्मधाम" (मुण्ड ३-२ ४) इति श्रुतेः । कथं तर्ह्येषा श्रुतिः ।

ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ। अस्य भाष्यं श्री मध्वस्य परमात्मैव भक्त्या दर्शनं प्राप्य मुक्ति ददातीति प्रधानसाधनत्वात् भक्तिः करणत्वेनोच्यते ॥ माया वैभवे च—

भक्तिस्थः परमो विष्णुः तयैवैनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥
स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः ।
भक्तिरित्युच्यते सैव कारणं परमेशितुः ॥ इति ॥

तत्रैव ३-२-१९ सूत्रव्याख्यानावसरे भाष्यं श्रीमध्वस्य–

नित्यसिद्धत्वात्सादृश्यस्य नित्यानन्दज्ञानादेः न भक्तिज्ञानादिना प्रयोजनमिति । अतो ब्रवीति-

ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ । अस्य भाष्यम्....

अम्बुवत् स्नेहेनासहितं, ग्रहणं ज्ञानं । भक्ति विना न तत्सादृश्यं सम्यगभिव्यज्यते । "यमेवैष[1] वृणुते तेन लभ्यः । तस्यैष[2] आत्माविवृणुते तनूंस्वां" (कठ-२-२३) इति हि श्रुतिः ॥

महित्त्वबुद्धि[3]र्भक्तिस्तु स्नेहपूर्वाभिधीयते ।
तयैव व्यज्यते सम्यक् जीवरूपं सुखादिकं ॥ इति पाद्मे ॥

महाभारत ता. नि. १-८५-८६ श्लोके श्रीमध्वेनोक्तं भक्तिलक्षणं (स्वरूपम्)

---

1. एतच्छब्दः अयम् । 2. इच्छारूपः इति आकारान्तः अयम् ।
3. स्नेहपूर्वकज्ञाने भक्तिरिति ज्ञानस्य विशेष्यत्वम् । उदाहरिष्यमाणवचने ज्ञानपूर्वक स्नेहस्य विशेष्यत्वमुच्यते । विशेषण विशेष्यभावाय कामचारत्वात् अविरोधः।

माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।

स्नेहो भक्तिरिति प्रोक्तः तया मुक्तिर्न चान्यथा ॥ इति ।
तत्वप्रकाशिकायां श्रीटीकाकृत्पादैः ३-२-१ 'भक्तिरुच्यतेऽस्मिन् पादे' इति भाष्य व्याख्यावसरे उक्तम्–

माहात्म्यज्ञान पूर्वकस्नेहो हि भक्तिः । न हि माहात्म्यानुक्तौ तज्ज्ञानं भवति स्नेहो वा इति ॥ स्यादेतत् । न स्नेहार्थं महिमोक्तिः युक्ता । तदभावेपि पुत्रादौ स्नेहदर्शनात् । क्वचित्तदुक्तावपि अदर्शनादिति । मैवम् । कारणान्तरेण फलसिद्धावपि अस्य कारणत्वाविरोधात् । न हि विनापि कारीर्यावृष्टिर्दृष्टेति तदनुष्ठानं वृष्टावकारणं भवति । श्रुतमाहात्म्येऽपि स्नेहानुत्पत्तिः मत्सरादिनिरुद्धा न माहात्म्यश्रवणस्याकारणत्वमाक्षिपति । न हि भर्जितं बीजं अङ्कुरं नोत्पादयति इत्येतावता बीजस्याङ्कुरकारणत्वं नास्ति ॥ इति ।

एतेन भक्तिलक्षणे दलकृत्यं सूचितम् । स्नेहः भक्तिः इत्येवोक्ते पुत्रादिगतस्नेहे अतिव्याप्तिः । तद्वारणाय माहात्म्यज्ञानपूर्वकत्वमिति विशेषणम् । महात्म्यज्ञानं भक्तिरित्येवोक्ते जरासन्धदुर्योधनादेः भीमे शिशुपालादेः कृष्णे माहात्म्यज्ञानसत्वे चातिव्याप्तिः । तद्वारणाय स्नेहः इति । तेषां तयोः द्वेषस्यैव सद्भावात् ॥ इति ।

सुदृढः इत्युक्तम् दार्ढ्यं वैराग्यादिना सिध्यति । अत एवानुव्याख्याने श्रीमध्वेन ३-३-१ । उपक्रमे

वैराग्यतो भक्तिदार्ढ्यं तेनोपास्ना यदाभवेत् ।
आपरोक्ष्यं तया विष्णोरिति पादक्रमो भवेत् ॥ इत्युक्तम् ।

भक्तिस्वरूपस्यास्य विवरणं श्रीटीकाकृत्पादैः सुधायां १७ पुटे(अंकिते) कृतमस्ति ।

परमेश्वरभक्तिर्नाम निरवाधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः, स्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकः, अन्तरायसहस्रेणापि अप्रतिबद्धः निरन्तरप्रेमप्रवाहः । यमधिकृत्य यत्र नान्यत्पश्यति नान्यच्छृणोति । 'सा निशा पश्यतो मुनेः' गीता २-६९ इत्यादिश्रुतिस्मृतिभ्यः ।

अत्र प्रेमप्रवाहस्य विशेषणत्रयम् । निरवधिकादिगुणत्वज्ञानपूर्वकत्वं एकम् । स्वात्मात्मीयसमस्तवस्तुभ्यः अनेकगुणाधिकत्वम् द्वितीयम् । अन्तरायसहस्रेणापि अप्रतिबद्धत्वादेव निरन्तरत्वं तृतीयम् ॥

अत्र तृतीयविशेषणमात्रनिवेशे वाय्वादेः भारत्यादौ तथाविधप्रेमप्रवाहस्य सत्वेपि न भक्तिः । अतः द्वितीयं विशेषणम् । तथापि रुद्रादीनां जगद्गुरुवायुदेवे तथाविधप्रेमप्रवाहस्य सत्वेपि न परमभक्तित्वं, अतः आद्यं विशेषणम् ॥ परमभक्तित्वं हरावेव ॥ एतादृशविशेषणविशिष्टस्य प्रेमप्रवाहस्या संभवशङ्कायां तत्कार्यभूतान्यदर्शनाभावसहित तदेकनिष्ठत्वप्रतिपादिका श्रुतिः स्मृतिश्चोदाहृता ।

किञ्च ज्ञानपूर्वकत्वमित्युक्ते निर्गुणत्वज्ञानपूर्वकत्वे अतिव्याप्तिः । अतः गुणत्वज्ञानपूर्वकत्वमिति । बृहन्तोह्यस्मिन्

गुणाः इत्यादिश्रुतेः भगवतः गुणपूर्णत्वमेव सिद्धम् ब्रह्मसूत्र-प्रथमाध्यायेन समर्थितम् । सत्वरजस्तमोगुणराहित्यमेव नि-र्गुणत्वं न तु सर्वात्मना गुणाभावः । दुःखद्वेषादीनामपि गुण-त्वेन तार्किकैः परिगणितत्वात् अनवद्येति । गुणानां श्रवण-स्मरणादिना शुभप्रदत्वात् कल्याणेति । नत्वेको गुणः, नापि 'महेश्वरेऽष्टौ मनसः तथैव च' इत्युक्तरीत्या अष्टौ । किन्त्व-नन्तेति । असंख्याकाः संख्यापरिच्छेदराहित्यं कालादितः अप-रिच्छिन्ना वा । श्रीभागवते ६-४-४८ श्लो 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इत्युक्तरीत्या एकैकगुणस्यापि अनन्तत्वात् निरवधिकेति । सीमापरिच्छेदराहित्यम् । स्वात्मनि स्वात्मीय समस्तवस्तुषु च यः प्रेमप्रवाहः ततोऽनन्तगुणाधिकत्वेन ''तदे-तत्प्रेयः पुत्रात्प्रेयः वित्तात्प्रेयः अन्यस्मात् सर्वस्मात् अन्तरतरं यदयमात्मा' इति (बृह. ३-५-१) श्रुतिप्रसिद्धिः सूचिता ॥

अत्रदृष्टान्तः विभीषणः 'त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः' । रामायणे ६-१७-१६-

परित्यक्ता मया लंका मित्राणि च धनानि च ।
भवद्गतं मे राज्यं च जीवितं च सुखानि च ॥

इति । (६-१९-५१)

अन्तरायसहस्रेणापि अप्रतिबद्धत्वात् नैरन्तर्ये दृष्टान्तः प्रह्लादः । भागवते- ७-५-४३ 'दिग्गजैर्दन्दशूकैश्चाभिचारावतापनैः ।
मायाभिः सन्निरोधैश्च गरदानैरभोजनैः ॥

हिमवाय्वाग्निसलिलैः पर्वताक्रमणैरपि ॥'

इत्याद्यन्तरायैरपि । ७-४-३८

आसीनः पर्यटन्नश्नन् शयानः प्रपिबन् ब्रुवन् ।
नानुसन्धत्त एतानि गोविन्दपरिरंभितः ।।

इति नैरन्तर्यवान् स्वतातं हिरण्यकशिपुमपि भक्तौ प्रेरयन् --

७-५-२३ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।।

इति नवविधभक्तिमार्गं उपदिदेश ।।

ननु भागवते ७-१-२६ to ३० श्लोकेषूक्तप्रकारेण --
यथा वैरानुबन्धेन मर्त्यः तन्मयतामियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मतिः ।।
कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् ।
संरम्भभय योगेन विन्दते तत्सरूपताम् ।।
एवं कृष्णे भगवति मायामनुज ईश्वरे ।
वैरेण पूतपाप्मानः तमापुरनुचिन्तया ।।
गोप्यः कामाद्भयात्कंसः द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद्वृष्णयः स्नेहात् यूयं भक्त्या वयं विभो ।।

कामादिना कथं मुक्तिरिति चेत् ।

श्रीमद्भागवततात्पर्ये श्रीमध्वेन पूर्वोक्तश्लोकव्याख्यावसरे उक्तम् ।

२६ श्लो, वैराभिनिवेशिनः यथा बहवः तथा भक्त्यभिनिवेशिनः न बहवः इत्यभिप्रायः । तत्र प्रमाणमाह - तत्र कनीयांस एव

देवाः ज्यायसः असुरा इतिश्रुतिः । तन्मयता मनसः तत्राभिनिवेशनम् ।

मागधाद्याः यथा नित्यं द्वेषादाग्रहिणो हरौ ।
न तथाऽऽग्रहिणो भक्ताः ऋते ब्रह्माणमव्ययम् ॥

इति हरिवंशेषु ।

श्लो २७ योगः स्नेहः । संरम्भभययुक्तस्नेहेन ।

"प्रीतिः स्नेहस्तथा योगः प्रेमबन्ध इतीर्यते" ॥ इति शब्दनिर्णये ॥ ततश्च स्नेहेनैव कीटः पेशस्कारिसाम्यंप्राप्तः । इतिदृष्टान्तेन चैद्यादयोपि भक्त्यैव साम्यं प्राप्ताः । न तु द्वेषादिना इति भावः ॥

२८ श्लो. वैरयुक्तयापि अनुचिन्तया तमापुः ।

"अनुचिन्तेतितामाहुः भक्तिपूर्वा तु या स्मृतिः" इति च ॥
स्नेहादन्नं ददातीति स्वकर्षणभयेपि च ।
विद्यमानेऽपि अल्पको हि सङ्गतिः स्नेहतस्तथा ॥
पेशस्कृद्रूपतां कीटः यथा याति तथैव तु ॥

(कृष्णविषयकवैरयुक्तयापि अनुचिन्तया तमापुः, किमु शुद्धचिन्तया इति योजना उक्ता भवति । चिन्तायाः दुष्टत्वेपि अनुचिन्तायाः न तथात्वम् इति भावेनानुचिन्ताशब्दार्थं प्रमाणेनाह)

चैद्यादयोऽसुरावेशात् हरौ द्वेषयुता अपि ।
निजस्वभावया भक्त्या नीता हरिसरूपताम् ॥

मम भक्तः जयादिः अन्यावेशेन यदि द्वेषं करोति तदा नित्यानन्दस्वरूपिणः मम किं हीयते । यथा पुत्रेण भूतावेशेन स्व-

स्यापराधेकृतेपि पिता सोढ्वैव भूतावेशपरिहारे यत्नं करोति तथेति भावः ।

तथा हि करुणो विष्णुः अन्यावेशाद्यदि द्विषन् ।
हीयते किं ममानेन नित्यानन्दस्वरूपिणः ॥
अतोयच्चासुरावेशात्कृतमेतेन दुष्कृतम् ।
अनादिभक्तो यस्मान्मे मोचयिष्ये ततस्त्वहम् ॥
इतिमत्वा मोचयति चैद्यादीनपि केशवः ॥ इति ब्रह्माण्डे ।

३० श्लो· कामादौ सर्वत्र भक्तियुक्तत्वमेव ग्राह्यम् । यतः —

गोप्यः कामयुता भक्ताः कंसाविष्टः स्वयं भृगुः ।
ज्ञेयो भययुतो भक्तः चैद्यादिस्थाः जयादयः ।
विद्वेषसंयुता भक्ताः वृष्णयो बन्धुसंयुताः ॥
(भावप्रधानः बन्धुत्व)

बहुमानस्नेहसाम्यात् देवाः भक्ताः प्रकीर्तिताः ।
स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः ॥
बहुमानोपि देवानामृषिभ्योप्यधिको मतः ।
ब्रह्मवीन्द्रेन्द्रकामादेरितरेषां यथाक्रमम् ॥ इति ब्रह्मतर्के ।

एवं भक्त्यैव सर्वत्र भगवत्प्राप्तिः इति सिद्धम् ॥

विष्णुरहस्ये उपपुराणे ५० अध्याये सूतशाकल्य संवादे भक्तिद्वेषविभागः स्पष्टं निरूपितः । तथा हि–

शाकल्य उवाच–

रसौषधिसमायोगात् यान्ति लोहानि हेमताम् ।
तथैव भगवत्स्मृत्या जीवाः चैतन्यमाप्नुयुः ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टः दहत्येव हि पावकः ॥
तत्कथं स्यात्तमःप्राप्तिः द्वेषेणापि हरेरिह ॥

सूत उवाच—

केनाप्युपायेनाथापि खर्परं हेम नो भवेत् ॥
तथा यः सत्स्वभावः स्यात्स एव हरिकीर्तनात् ।
उत्तमां गतिमाप्नोति नान्य इत्येव निश्चयः ॥
अग्निर्दहति काष्ठानि नादाह्यं दहति क्वचित् ।
तथास्वभावभक्तानां दोषान्मलिन चेतसाम् ॥
हरिनाम दहेत्पापं दाह्यमेव हि यद्भवेत् ॥
चैद्यसाल्वादयो दैत्याः अन्येपि बहवः पुरा ॥
स्वभावभक्ताः श्रीशस्य दुष्टाविष्टाः द्विषन्त्यमुम् ॥
भूतग्रहपिशाचाद्यैराविष्टस्य तु कस्यचित् ॥
दुरुक्तादेर्नचोद्वेगः तदीयानां प्रजायते ।
किन्तु येन प्रविष्टं सः तमेव द्विषते जनाः ॥
तस्यापसारबन्धादौ क्लेशनादौ यतन्ति वा ।
तथा येन समाविष्टः हरिद्वेषं करोत्ययम् ॥
तमेव पातयत्यन्धे तमसि द्वेषिणं हरिः ।
भक्तं तु तारयत्येव तद्भक्तो न प्रणश्यति ॥
द्वेषिणोपि यथा मुक्तिः तर्हि भक्ति करोति कः ।
रमाब्रह्मादयः किन्तु मूढाः तद्भक्तिकारिणः ॥
तमेवं विद्वानमृतो यमेवैष वृणुतेति सः ।
मोक्षभागिति वाक् श्रौती कथं लोकानुपादिशेत् ॥

वैराग्येण तदा किं स्यात्किं वास्याच्च शमादिभिः ।
किं भोगैश्चापि किं दानैर्यज्ञैः कृच्छ्रादिभिश्च किम् ॥
हिरण्यकशिपुर्द्वेषात् यदि विष्णुपदं व्रजेत् ।
प्रह्लादस्तत्सुतः कस्माद्धरिभक्तिं दृढां चरेत् ॥
ज्वरितो यः पिबेत्क्षीरं भ्रान्त्या वा प्रमयाऽथवा ।
तिक्तमेवभवेत्तच्च ज्वरं चापि विवर्धयेत् ॥
तथा स्वभावदुष्टेन हरिर्ध्यातः स्मृतोऽपि वा ।
सर्वथापकरोत्येव तदर्थं हि यतस्ततः ॥
अन्यथा कस्तमो यायात् यदनारम्भणः श्रुतौ ।
अनन्तं वत्रमित्युक्तं न परावर्तते यतः ॥
रहस्यमित्थं ज्ञात्वैव प्रियव्रतमुखा नृपाः ।
तस्य भक्त्यैव परमं याताः पदमलौकिकम् ॥
त्यक्तवान् रावणं भ्राता ज्येष्ठबन्धुर्विभीषणः ।
सर्वस्वमार्पयद्भक्त्या वामनाय बलिः पुरा ॥
पतिपुत्रगृहादीनि त्यक्त्वा गोप्योपि तं ययुः ।
पूर्वं राजा विदेहाख्यः त्यक्तकामो हरिं व्रजत् ॥

राजर्षि देवर्षि मुख्याः समस्ताः ब्रह्मर्षयश्चापि समाधियोगैः ।
त्यक्ताशवाः त्यक्तशरीरभावाः सर्वात्मनायं शरणं प्रपन्नाः ॥
द्वेषेण मुक्तिर्यदि कस्यचित्स्यात्तर्ह्यत्रलोकेपि परस्य तापात् ।
सन्तोषतः लब्धफलाः स्युरेव नैवं तथातद्द्विषतो हि मोक्षः ॥

द्रष्टैव सर्वदैवात्मा तमेवैकञ्च जानथ ।
वान्यवार्ता. कुरुध्वञ्च श्रोतव्य. प्रथमं हि सः ॥

मन्तव्यश्चिन्तनीयश्च प्रीतः साक्षाद्भवेद्धरिः ।
प्रसादेनैव तस्यैव मोक्षः स्यान्नैतदन्यथा ॥
श्रुतिराहेत्थमाश्वासात् तस्माद्भक्त्यैव मोचनम् ।
विना भक्त्या प्रसादेन मुक्तिः स्यात्तं विना न हि ॥
नातो द्वेषेण मुक्तिः स्यात् किन्तु स्यात्तु तमःस्थितिः ।
रहस्यं परमं एतत् विष्णोरमिततेजसः ॥ इति ।

अस्मिन्नेव विषये श्रीवादिराजेश्वरैः स्वकीयरुक्मिणीशविजयाख्य-महाकाव्ये सर्गे २, ४२ to ६० श्लोकैः उक्तम् ॥ तथा हि—
यदिप्रभुर्विद्विषतोपि शौरिः प्रसादकृत्तर्हि कुतःसुरारीन् ।
विजित्य भक्ताय तदीयभाग्यं प्रयच्छति स्वैरमिहावतीर्य ॥
द्विषां हरिर्यच्छति यर्हि मोक्षं न तर्हि कस्मादपवर्गमार्गः ।
अरिष्टवातासुरवत्सकेशिविनाशकाले विवृतःशुकेन ॥
विद्वेषमूलस्मरणेन तुष्टिरित्यप्यवद्यं न जहाति पक्षः ।
हिंसार्थमालिंगयतस्तरक्षोः किं चेष्टया तुष्यति कामधेनुः ॥
ज्ञानान्यमार्गप्रतिषेधकर्त्र्या श्रुत्या च निर्णायकसूत्रकर्त्रा ।
किमेष मार्गः सुलभो न दृष्टः किं वा तपस्या व्रतकर्शिताङ्गैः ॥

आपोऽब्रुवन्नितिसनातनवेदवाक्यात्
किं वक्तृता जडजलस्य तथा शुकोक्तौ ।
कंसादिमोक्षवचनान्यपि युक्तियुक्त-
मानान्तरोदितमनोमधुरार्थभाजि ॥

यथा ग्रहाविष्टकलेवरे द्वौ कृत्वाभिमानौ इह चेतनौ स्तः ।
तथैव कंसादिशरीरसंस्थौ शुभाशुभौ द्वौ शुभदुःखभाजौ ॥

तथैव चैद्ये जयनामकः सन् तथापरस्मिन् विजयाभिधानः ।
निरन्तरद्वेषफलस्य मूलं बलेन रक्षोऽपि हि तर्हि सिध्येत् ॥
यदीह चैद्यो दितिजो न वैरान्न तर्हि मोक्षः परिचर्ययैव ।
यदा तु सेवाविधुरोऽपरोऽस्ति तदा बलात्सिध्यति जीवयुग्मम् ॥

विद्वेषिजीवकृतसङ्गमपि स्वभक्तं
कृष्णो व्यमोचयदहो करुणाम्बुराशिः ।
किं नाम तद्रहितभक्तजनानिति स्म
कैमुत्यमूहयत सत्यवतीसुतोक्त्या ॥

द्वेषाभिवृद्धिं द्विषतां विधातुं व्यासश्च न स्पष्टमिदं प्रमेयम् ।
ऊचे न चेत् भक्तजनैरगम्यं पापैरसाध्यं तम आप्नुयात्कः ॥

[परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः इति श्रुतेः । ?
भागवतं ४-२८-६५

बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ।
यत्परोक्षप्रियो देवः भगवान्विश्वभावनः ॥ इति च ।

सू ॐ अनाविष्कुर्वन्नन्वयात् ॐ ३-४-४९ इति सूत्रे भाष्ये च

अयोग्येभ्यः कथनं तु श्रुत्यादि निषिद्धम् ॥ ]

'अमलाभक्तिश्चतत्साधनम्' इत्युक्तभक्तेः अमलत्वं नाम किं ?
भारत-ता-नि-अ-१-११२ to

जीवाभेदो निर्गुणत्वं अपूर्णगुणता तथा ।
साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥

प्रादुर्भावविपर्यासः तद्भक्तद्वेष एव च ।
तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिलाः मताः ॥
एतैर्विहीना या भक्तिः सा भक्तिरिति निश्चिता ।
अनादिभक्तिर्देवानां क्रमाद्वृद्धिं गतैव सा ॥

अपरोक्षदृशेर्हेतुर्मुक्तिहेतुश्च सा पुनः ॥
भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् ।
स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम् ॥

इत्यादि सर्वं समञ्जसम् ॥

इतः परमक्षादि त्रितयं प्रमाणम्

## ८. अक्षादि त्रितयं प्रमाणम् ॥

तदुक्तं श्री मध्वाचार्यैः तत्वविवेकाख्य ग्रन्थेऽन्तिमश्लोके—

य एतत्परतन्त्रं तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ इति ॥

निखिलापेक्षित मोक्षस्य भगवत्तदन्यस्वातन्त्र्यास्वातन्त्र्यज्ञान-साध्यत्वात् मुमुक्षुणा परतन्त्रमिदं स्वतन्त्रभगवदायत्ततयाऽवश्यं वेदितव्यमिति । पराःपरतत्वज्ञानञ्च प्रमाणाधीनमिति तन्निरू-पणार्थं प्रमाणलक्षणं नाम ग्रन्थरत्नं प्रकटय्योपकारराशिमस्था-पयत् अस्मदादिमूर्धसु । शास्त्रान्तरेषु यथा शास्त्रोदधिप्रवेश-नाय तर्य इव तर्कसंग्रहादयः ग्रन्था वर्तन्ते, तथेदं प्रकरणम् । तथापि गम्भीरया वाचा विक्षिप्य वर्णितं न मन्दैः शक्यते सुखेन बोद्धुं इति श्री जयतीर्थ यति सर्वभौमः प्रमाणपद्धतिनामकं

ग्रन्थं रचितवान् । सोऽपि नाल्पप्रज्ञैः सुखेन शक्यते बोद्धुमिति तेषां तद्बोधनार्थं प्रायेण तदुक्तमेव किञ्चित्प्रमेयं संक्षेपेण प्रतिपादयितुं प्रमाणचन्द्रिकाख्यं प्रकरणं श्रीमच्छलारि शेषाशार्यैर्विरचितम् । तत्प्रदर्शितमार्गेण प्रमाणलक्षणादिकं निरूप्यते ।

यथार्थं प्रमाणम् । यथावस्थितज्ञेयविषयीकारित्वं प्रमाणसामान्यलक्षणम् । तत् द्विविधम्, केवलं अनुप्रमाणं चेति ॥ तत्र, यथार्थज्ञानं केवलप्रमाणम् । ईश्वरज्ञानं, लक्ष्मीज्ञानं योगिज्ञानं, अयोगिज्ञानञ्चेति चतुर्विधम् । योगिज्ञानञ्च ऋजुयोगिज्ञानं, तात्विकयोगिज्ञानं, अतात्विकयोगिज्ञानं चेति त्रिविधम् । तत्त्वाभिमनिनः तात्विकाः । तद्व्यतिरिक्ताः अतात्त्विकाः देवर्षिप्रभृतयः । अयोगिनः मुक्तियोग्याः, नित्यसंसारिणः तमोयोग्याश्चेति त्रिविधाः ॥

ऋजुयोगिज्ञानं स्वरूपं मनोवृत्तिरूपं चेति द्विविधम् । आद्यं अनादिनित्यम् । द्वितीयं तु प्रवाहतोऽनादि । द्वयमपि नियमेन यथार्थम् । तात्विकातात्विकयोगिजाने स्वरूपं यथार्थमेव। बाह्यं कदाचिदयथार्थम् । अयोगिषु मुक्तियोग्यानां स्वरूपज्ञानं यथार्थमेव । नित्यसंसारिणां तु मिश्रमेव । तमोयोग्यानां त्वयथार्थमेव । बाह्यं तु त्रयाणामपि उभयविधम् इति ।

यथार्थज्ञानसाधनं अनुप्रमाणम् । तत् त्रिविधम् १. प्रत्यक्षं २. अनुमानं ३. आगमश्चेति । अर्थग्रहणक्रमेण निर्देशः । तत्त्रैविध्यात् तज्जन्यज्ञानमपि त्रिविधम् । प्रत्यक्षं अनुमितिः शाब्दं इति भेदेन । एतत्प्रमाणत्रयादन्यत् न प्रमाणम् । कुतः इति

चेत् । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृह. ६-५-५) इति श्रुतौ - अरे मैत्रेयि अमृतत्वमिष्यते चेत् आत्मा परमात्मा त्वया द्रष्टव्यः । दर्शनं केन स्यात् ? निदिध्यासितव्यः । तदर्थं श्रोतव्यः गुरूपदेशेनास्य वाक्यस्य अयमर्थ इति ग्रहणरूपश्रवणेन विषयीकर्तव्यः । तथा मन्तव्यः । युक्त्यनुसन्धानात्मकमनने विषयीकर्तव्य इति प्रमाणत्रयस्य वर्णितत्वात् ।

नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति । तस्मादाहुर्वेदाः इति पिप्पलादश्रुतौ प्रमाणत्रयस्य श्रुतत्वात् ।

३. मनुस्मृतौ (?)

प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ इति

प्रमाणत्रयस्यैव स्मृतत्वात् ॥

ननु १. अर्थापत्तिः २. उपमानं ३. अभावः ४. संभवः ५. परिशेषः ६. ऐतिह्यमित्यादि पृथक् प्रमाणानि सन्त्येव । तत्कथं त्रित्वमिति चेत् । १. अर्थापत्तेः अनुमानेऽन्तर्भावः । २. उपमानस्यापि तथा - विमतः गवयशब्दवाच्यः अगोत्वे सति गोसदृशत्वात् । व्यतिरेकेण घटवत् इति । ३. अभावस्य प्रत्यक्षादित्रिष्वपि अन्तर्भावात् । इदानीं कौरवाद्यभावः भारताद्यागमात् अवगम्यते । देवदत्तस्य चक्षुराद्यभावः अनुमानेन (अरूपज्ञत्वात् इत्यादि) । पुरोवृत्तिघटाद्यभावः प्रत्यक्षेणेति ॥ ४. शतमस्तीति ज्ञाने पञ्चाशज्ज्ञानं संभवः । सोऽ-

प्यनुमानेऽन्तर्भवतीति ।। ५. परिशेषोऽपि विमतः मैत्रः, चैत्र मैत्रयोः अन्यतरत्वे सति अचैत्रत्वात् इत्यनुमानमेव ।।

६. अनिर्दिष्टवक्तृकं प्रवादपारम्पर्यं ऐतिह्यम् । यथाऽत्रवटे पिशाचोऽस्तीति ।

वटे वटे वैश्रवणः चत्वरे चत्वरे शिवः ।
पर्वते पर्वते रामः सर्वत्र मधुसूदनः ।। इति च ।

तत् आगम एव । एवमन्यानि शाकुनलिपिचेष्टादीन्यपि प्रमाणानि उक्तेष्वन्तर्भाव्यानि ।।

अथ प्रत्यक्षादीनां लक्षणविभागादीनि चोच्यन्ते ।तथा हि— निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् । तत्सप्तविधम् । साक्षिषडिन्द्रियभेदात् । चेतनस्वरूपेन्द्रियं साक्षीत्युच्यते । तस्यविषयाः आत्मस्वरूपं, तद्धर्माः, सुखादयः, मनः तद्वृत्तयः, कालः अव्याकृताकाशः इत्याद्याः ।

इन्द्रियजन्यज्ञाने - आत्मा मनसा संयुज्यते, मन इन्द्रियेण इन्द्रियमर्थेनेति आत्मादिचतुर्णां सन्निकर्षः कारणम् । अस्मन्मते एक एव सन्निकर्षः संयोगः सम्बन्धः न तु षड्विधः । इति पूर्वोक्तग्रन्थेषु सम्यक् समर्थितम् । विस्तरभिया नेहोच्यते ।

संस्कारमात्रजन्यं ज्ञानं स्मृतिरिति केचिदाहुः । अस्माभिस्तु भावनासहकृतमानसप्रत्यक्षजन्यत्वाङ्गीकारात् ।।

अथानुमानं निरूप्यते । निर्दोषोपपत्तिः अनुमानं । उपपत्तिर्युक्तिः लिङ्गं व्याप्यं इति पर्यायः । यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः । न तु सामानाधिकरण्यमेव । ऊर्ध्वदेशो वृष्टिमान् । अधोदेशे नदीपूरात् । यदा अधोदेशे नदीपूरस्तदा ऊर्ध्वदेशे वृष्टिः यथा सम्प्रतिपन्नम् इत्यादिव्यधिकरणानुमाने अव्याप्तेः ।

त्रिविधं अनुमानम् । १. कार्यानुमानम् २. काराणानुमानम् ३. अकार्यकारणानुमानं चेति । १. यथाधूमः अग्नेरनुमापकः । २. विशिष्ट मेघोन्नतिः वृष्टेः । ३. यथारसः रूपस्यानुमापकः । इति ॥

अस्मन्मते प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवानां प्रतिपुरुषबोधने नियमः नास्ति ।

अथागमो निरूप्यते । निर्दोषः शब्द आगमः । शब्दः पदवाक्यात्मकः । विभक्त्यन्ता वर्णाः पदम् । आकांक्षायोग्यतासन्निधिमतां पदानां समूहो वाक्यम् । अत्र वाक्यं करणम् । पदार्थस्मृतिः अवान्तरव्यापारः । वाक्यार्थज्ञानं फलम् । शक्तिग्रहश्च अङ्गुलिप्रसारणादिपूर्वकनिर्देशेनैव भवति । न तु वृद्धादिव्यवहारात् । आगमो द्विविधः । अपौरुषेयः पौरुषेयश्चेति । तदुक्तम् ।

आगमो द्विविधो ज्ञेयः नित्योऽनित्यस्तथैव च ।
ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ॥ इत्यादि ।

अपौरुषेयः ऋगादिः पौरुषेयः वाक्यसमूहत्वात् कालिदासादि-वाक्यवत्। इति चेन्न। श्रूयमाणकर्तृकत्वस्योपाधित्वात्। बह्वागमविरोधश्च। अथ प्रामाण्यं निरूप्यते। प्रामाण्यस्य स्वतस्त्वं, अप्रामाण्यस्य परतस्त्वम्। इन्द्रियादिनैव ज्ञानं प्रामाण्यञ्चोत्पद्यते। अप्रामाण्यन्तु दोषसहकृतेन्द्रियादिभिः उत्पद्यते। तथा ज्ञानं तत्प्रामाण्यञ्च साक्षिणैव ज्ञायते। अप्रमाणज्ञान स्वरूपमात्रं साक्षिवेद्यम्। तदप्रामाण्यं तु विसंवादादिना अनुमेयमिति। इति सर्वं रमणीयम्॥ इतः परमखिलाम्नायैकवेद्यो हरिः॥

## ९. अखिलाम्नायैकवेद्यो हरिः

ॐ जन्माद्यस्य यतः ॐ १-१-२ इति सूत्रे जगज्जन्मादि-कारणत्वरूपब्रह्मलक्षणस्य रुद्रादिष्वतिव्याप्तिपरिहाराय प्रवृत्तं ॐ शास्त्रयोनित्वात् ॐ अनेन न जगत्कारणं आनुमानिकं तस्य शास्त्रैकसमधिगम्यत्वात् धर्मादिवत् इत्यनुमानमुक्तं भवति। हेतोरसिद्धिपरिहाराय शास्त्रैकवेद्यत्वं कुतः इत्यत आह १-१-३ भाष्ये श्री मध्वः—

नावेदविन्मनुते तं बृहन्तं सर्वानुभूं आत्मानं साम्पराये (तै. आ. ३-१२-९) अत्र वेदवित् वेदतदर्थाज्ञो वेदविरुद्ध-ज्ञानी वा तं न जनाति। वेदादन्यत् जगत्कर्तारं न प्रमायति। वेदविदेव जानाति। वेद एव प्रमायति इत्युच्यते। अतः आम्नायैकवेद्यः हरिः। किञ्च

औपनिषदः पुरुष इति श्रुत्यन्तरं (?) अत्राङः प्रश्लेषः कार्यः। अत्र पुरुषः हरिः जगत्कर्ता आ औपनिषदः उपनिषदेक

म्यः इत्युच्यते । 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।' (कठ १-२-१५)

अत्र सर्वे वेदाः ऋगाद्याः यत्स्वरूपं आ मुख्यवृत्त्या मनन्ति वदन्ति इत्युच्यते । तत्रैव (१-२-९)

'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।' एषा ब्रह्मविषया मतिः तर्केण केवलानुमानेन आनेया उत्पाद्या अपनेया निराकार्या च न भवति । प्रेष्ठ नचिकेतः । अन्येनैव अन्यो भगवान् अन्योऽहं इति ज्ञानवान् यो भेदज्ञानी तेनैव प्रोक्ता वेदप्रवचनोत्पादिता मतिः साक्षात्काराय भवति । (इत्यनुमानावेद्यत्वम्)

(बृह-उप ५-९-२६) 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति ।

'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति ।' इति भाल्लवेय श्रुतेः च शास्त्रैकयोनित्वात् नासिद्धिः । अत्र प्रत्यक्षानुमानाभ्यां अवेद्यत्वं वेदैकवेद्यत्वञ्चोच्यते ।

१-१-५ सूत्रभाष्ये श्रीमध्वेनोक्तं - औपनिषदत्वान्नावचनेन ईक्षणम् इति । तस्य ब्रह्मणः उपनिषदेकसमधिगम्यत्वात् अवचनेन वचनेतरप्रमाणेन ईक्षणं ज्ञानं न इत्यर्थः । तथा च प्रत्यक्षत्वाद्यवेद्यत्वविशिष्टेक्षणीयत्वान्यथानुपपत्त्या आम्नायैकवेद्यत्वं सिध्यति ।

गीता १५-१५ 'वेदैश्च सर्वैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम्'' इति । अहं श्रीकृष्णः एव सर्वैर्वेदैः मुख्यतः प्रतिपाद्यः इति निखिलाम्नायैकवेद्यत्वं च सिध्यति ।

१-१-१ भाष्ये श्रीमध्वोदाहृतम्—

नामानि विश्वागमि न सन्ति लोके यदाविरासीत् अनृतस्य सर्वम् ।

नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ॥
इति भाल्लवेयश्रुतिः । 'यो देवानां नामधा एक एव तं सं प्रश्नं भुवना यन्त्यन्या' (ऋ-सं १०-८२-३) इत्येवशब्दान्नान्येषां सर्वनामता ॥

मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।
इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ॥ इति ।

भागवते ११-२१-४२

तदीयतात्पर्ये श्रीमध्वोदाहृतञ्च—

विधिभागे हरेः पूजैवाभिधाने च तद्गुणाः ।
विकल्पे तद्बहुत्वञ्चाप्यपोहे तु तदप्रियम् ॥
उच्यते सर्ववेदेषु तच्च वेद स एव हि ॥

ब्रह्मसूत्रभाष्याद्याध्यायेन हरौ सर्वशब्दसमन्वयस्य कृतत्वाच्च न केवलमखिलाम्नायैकवेद्यः, किन्तु लौकिकादिसर्वशब्दवेद्यश्चेति सिद्धम् ॥

सर्वैश्च वैदिकपदैरपि लोकशब्दैः
मेघाग्निवारिधितलादिभवैश्च सर्वैः ।
एकोऽभिधेयपरिपूर्णगुणः प्रियोऽलं
नारायणो मम सदैव सुतुष्टिमेतु ॥

तस्माच्छ्रौतश्च यौक्तश्च मध्वस्य मतमाफलात् ।
हृद्यश्च निरवद्यश्च तत्सर्वमतिमङ्गलम् ॥

श्रीमध्वान्तर्गत श्रीरामकृष्णः प्रीयताम्

नमोस्तु गोपालगुणप्रियाय
नमोस्तु मध्वामृतदायकाय ।
नमोस्तु चन्द्रामृतधारकाय
व्यासार्यनाम्ने च गुरूत्तमाय ॥

प्रह्लादरूपेति यतीश्वरेति
श्रीव्यासतीर्थेति दयापरेति ।
श्रीराघवेन्द्रेति गुरूत्तमेति
संलापिनं प्रतिपदं कुरु मां यतीश! ॥

श्रीश्रीनिवासं रमणीयरूपं
गोपालमूर्तिं चिरपूजितं तम् ।
श्री व्यासतीर्थं महनीयमूर्तिं
नमामि नित्यं गुरुसार्वभौमम् ॥

विगाहे चन्द्रिकाचार्यशीतला (तीर्थ) सन्ततिम् ।
रुक्मणीशकृपाम्बोधि परीवाहपरम्पराम् ॥

धरित्रीमण्डले ख्यातं धैर्यादिगुणभूषितम् ।
वन्दे वेदान्तधिषणं श्रीमद्विद्यापयोनिधिम् ॥

तिरुवादि जयीन्द्रार्यं न्यायवेदान्तपारगम् ।
सौलभ्यादि गुणैर्युक्तं वन्दे विद्यागुरुं मम ॥

विद्यावाचस्पति, आस्थानविद्वान् श्री व्यासरायमठम्
सा. रा. रघूत्तमाचार्येण विमर्शकपूर्वकं मध्वमतग्रन्थेषु संगृह्य
समालिखितम् (मद्रपुरी)

श्री श्रीपरमहंसेत्यादि बिरुदावली समलंकृतानां महानुभावानां
श्री श्रीविद्यापयोनिधितीर्थानां परमानुग्रहेण तथा
T. T. D. साहाय्येन च प्रकाशितम् ॥

॥ शुभमस्तु ॥

